द्वितीयस्थाने न्यसेत्। एवं वियोज्यान्तिमस्थानाङ्कं यावत्कृते रेखाधो येऽङ्काः स्युस्तदभीष्टसंख्ययोरन्तरं स्यात्। किन्तु यत्र वियोजकाङ्का-च्चदूर्ध्वस्थवियोज्याङ्को न्यूनो भवति, तत्र न्यूनाङ्के दश संयोज्य तद्योगश्च वियोज्याङ्कम्प्रकल्प्य तस्माद्वियोजकाङ्कःशोध्यः। ततश्च तद्वामभागे स्थितमपरं वियोजकाङ्कं सैकं कृत्वा स स्वोर्ध्वस्थाङ्काच्छोध्यः एतत्प्रतीत्यर्थं कतिचिदुदाहरणानि प्रदर्श्यन्ते।

( दो संख्याओं का अन्तर करने में वियोज्य के नीचे वियोजक को इस तरह रखो कि वियोज्य के एक, दश आदि स्थान के अङ्कों के नीचे वियोजक के एक, दश आदि स्थान के अङ्क क्रम से रहें। इस तरह वियोज्य और वियोजकको रखने पर जहां वियोजक के अङ्क वियोज्य के अङ्कों से न्यून होते हैं वहां वियोज्य की बाईं तरफ के जिन अङ्कों के नीचे वियोजक के अङ्क न होंगे उन अङ्कों के नीचे शून्य हैं ऐसी कल्पना करो। फिर वियोज्य और वियोजक के नीचे एक रेखा खींचकर वियोजक के एक स्थान के अङ्क में जिस अङ्क को जोड़ने से वियोज्य का एक स्थान का अङ्क होगा उस अङ्क को अन्तरके पहिले स्थान में रखो। इसी प्रकार वियोजक के दश स्थान के अङ्क में जिस अङ्क को जोड़ने से वियोज्य का दश स्थान का अङ्क होगा उस अङ्क को अन्तर के दूसरे स्थान में रखो। इसी तरह वियोज्य के अन्तिम स्थान के अङ्क तक करने पर रेखा के नीचे जो संख्या होगी वही अन्तर होगा। परन्तु जहां पर वियोजक के अङ्क से वियोज्य का अङ्क न्यून होता है, वहां उस न्यून अङ्क में दस जोड़ कर और उस योग को वियोज्य का अङ्क समझ कर उसमें वियोजक का अङ्क घटाओ। फिर उस वियोजक के अङ्क की बाईं तरफ जो दूसरा अङ्क होगा उसमें एक जोड़ कर उसको अपने ऊपर के वियोज्य के अङ्क में घटाओ। यह सब बातें अच्छी तरह ध्यान में आजाएं इस लिये नीचे कुछ उदाहरण दिखलाये जाते हैं। )

उदाहरणम् ( १ ) ९, ४, अनयोरन्तरम्ब्रूहि।

( इनका अन्तर कहो। )

९ वियोज्यः,
४ वियोजकः, अत्र चतुर्षु पञ्च योजनेन नव भवन्तीत्युक्तसंख्ययोः ५
५ अन्तरम्, इदमन्तरं जातम्।

( यहां ४ में ५ को जोड़ने से ९ होते हैं इस लिये उक्त संख्याओं का ५ यह अन्तर हुआ। )

उदाहरणम् ( २ ) ११२५, ८९, अनयोरन्तरं वद।

( इनका अन्तर कहा )

११२५ वियोज्यः, अत्र पूर्वं १, १, अनयोर्वियोज्यवामपार्श्वस्थाङ्कयोर-
८९ वियोजकः, धोभागे शून्ये स्त इति कल्प्यम्, ततश्चात्र वियोज-
१०३६ अन्तरम्, कैकस्थानाङ्कात् ९ अस्माद्वियोज्यैकस्थानाङ्कः ५ अयं न्यूनोऽस्तीति ५ अस्मिन् १० संयोज्य ९, ६ अनयोर्योगः १५ अयं भवतीति ६ अयमङ्कोऽन्तरप्रथमस्थाने स्थाप्यः, ततः ९ अस्माद्वामभागे स्थितः ८ अयं वियोजकापराङ्कोऽस्ति, अतः ८ अस्मिन् १ रूपं संयोज्य तदूर्ध्वाङ्के च २ अस्मिन् १० संयोज्य ९, ३ अनयोर्योगः १२ अयम्भवतीति ३ अयं द्वितीयस्थाने स्थाप्यः, ततः ८ अस्य वामभागस्थे ० अस्मिन् १ रूपं संयोज्य १, ० अनयोर्योगः १ अयम्भवतीति ० अयन्तृतीयस्थाने स्थाप्यः, ततस्तद्वामपार्श्वस्थस्य ० अस्य १ अस्य च योगः १ अयं भवतीति १ अयञ्चतुर्थस्थाने स्थाप्यः।

( यहां पहिले वियोज्य की बाईं तरफ के १, १ इन अङ्कों के नीचे शून्य हैं ऐसा समझ लो, फिर वियोजक का एक स्थान का अङ्क ९ इस से वियोज्य का एक स्थान का अङ्क ५ यह न्यून है इस लिये ५ इस में १० जोड़ो, फिर ९ में ६ को जोड़ने से १५ होते हैं, इस लिये ६ इसको अन्तर के पहिले स्थान में रखो, फिर ९ इसको बाईं तरफ वियोजक का अङ्क ८ यह है, इस लिये ८ इसमें १ को जोड़ कर उसके ऊपर के २ इस अङ्क में १० को जोड़ो, फिर ९ में ३ को जोड़ने से १२ होते हैं, इस लिये ३ इसको अन्तर के दूसरे स्थान में रक्खो, फिर ८ इसकी बाईं तरफ के ० इसमें १ को जोड़ कर १ में ० को जोड़ने से १ होता है, इस लिये ० इसको तीसरे स्थान में रखो, फिर ० इसकी बाईं तरफ के ० इस अङ्क में १ को जोड़ने से १ होता है इसलिये १ इसको चौथे स्थान में रखो। )

उदाहरणम्। ( ३ ) १०००, ९ अनयोरन्तरं किं स्यात्।

( इनका अन्तर क्या होगा। )

१००० वियोज्यः, अत्र वियोज्यवामपार्श्वस्थानां १०० एषामधस्ता-
९ वियोजकः, च्छून्यानि सन्तीति कल्प्यं, ततः ९ अस्मात् ० अयं
९९१ अन्तरम्, न्यूनोऽतस्तत्र १० संयोज्य, ९, १ अनयोर्योगः १० अतः १ अयम्प्रथमस्थाने स्थाप्यः, ततः ९ अस्य वामपार्श्वस्थे ० अस्मिन् १ रूपं संयोज्योपरितनाङ्के च ० अस्मिन् १० संयोज्य १, ९ अनयोर्योगः १० अतः ९ अयन्द्वितीयस्थाने स्थाप्यः, ततः ० अस्य वाम-

पार्श्वस्थे वियोजकाङ्के ० अस्मिन् १ रूपं संयोज्य तदुपरितनाङ्के च ० अस्मिन् १० संयोज्य १, ९ अनयोर्योगः १० अतः ९ अयन्तृतीयस्थाने स्थाप्यः, ततः ० अस्य वामपार्श्वस्थे वियोजकाङ्के ० अस्मिन् १ रूपं संयोज्य १, ० अनयोर्योगः १ अतः ० अयश्चतुर्थस्थाने स्थाप्यो भवति, किन्तु कस्याश्चित्संख्याया वामपार्श्वे एकस्य शून्यस्यानेकशून्यानां वा स्थापनेनापि तस्याः संख्याया माने कोऽपि विशेषो न भवतीति नियमादत्रान्तिमस्थाने शून्यं न स्थाप्यम्, अत उक्तसंख्ययोः ९९१ इदमन्तरं जातम्।

( यहां वियोज्य की बाईं तरफ के १०० इन अङ्कों के नीचे शून्य हैं ऐसी कल्पना करो, फिर ९ इससे ० यह न्यून है इस लिये ० इसमें १० जोड़ कर ९ में १ को जोड़ने से १० होते हैं इस लिये १ इसको पहिले स्थान में रखो, फिर ९ इसकी बाईं तरफ के ० इस वियोजक के अङ्क में १ जोड़ कर उसके ऊपर के ० इस अङ्क में १० जोड़ो, फिर १ में ९ जोड़ने से १० होते हैं इस लिये ९ इसको दूसरे स्थान में रखो, फिर ० इसकी बाईं तरफ के ० इस वियोजक के अङ्क में १ को जोड़ कर उसके ऊपर के ० इस अङ्क में १० जोड़ो, फिर १ में ९ जोड़ने से १० होते हैं, इस लिये ९ इसको तीसरे स्थान में रखो, फिर ० इसकी बाईं तरफ के ० इस वियोजक के अङ्क में १ जोड़ कर १ में ० को जोड़ने से १ होता है इस लिये ० इसको चौथे स्थान में रखना चाहिये, परन्तु किसी संख्या की बाईं तरफ एक वा अनेक शून्य रखने पर भी उस संख्या का मान बदलता नहीं, ऐसा नियम होने से यहां अन्तर के अन्तिम स्थान में शून्य को रखना व्यर्थ ही है, इस लिये ९९१ यह उक्त संख्याओं का अन्तर हुआ। )

उदाहरणम् ( ४ ) १०९६७४, ९९८९०, अनयोरन्तरं कुरु।

( इसका अन्तर करो )

१०९६७४ वियोज्यः, अत्र ०, ४ अनयोर्योगः ४ अतः ४ अयम्प्रथम-
९९८९० वियोजकः, स्थाने स्थाप्यः, ततः ९, ८ अनयोर्योगः १७ अतः
९७८४ अन्तरम्, ८ अयं द्वितीयस्थाने स्थाप्यः, ततः ९, ७ अनयोर्योगः १६ अतः ७ अयं तृतीयस्थाने स्थाप्यः, ततः १०, ९ अनयोर्योगः १९ अतः ९ अयं चतुर्थस्थाने स्थाप्यः, ततः १०, ० अनयोर्योगः १० अतः ० अयम्पञ्चमस्थाने स्थाप्यः, पुनः १, ० अनयोर्योगः १ अतः ० अयं षष्ठस्थाने स्थाप्यः, किन्तूक्तनियमादत्रान्तरस्य वामभाग इदं शून्यद्वयं न स्थाप्यं, अत उक्तसंख्ययोः ९७८४ इदमन्तरं जातम्।

( यहां ० में ४ को जोड़ने से ४ होते हैं इसलिये ४ इसको पहिले स्थान में रखो, फिर ९ में ८ को जोड़ने से १७ होते हैं इस लिये ८ को दूसरे स्थान में रखो, फिर ९ में ७ को जोड़ने से १६ होते हैं इस लिये ७ को तीसरे स्थान में रखो, फिर १० में ९ को जोड़ने से १९ होते हैं इस लिये ९ को चौथे स्थान में रखो, फिर १० में ० को जोड़ने से १० होते हैं इस लिये ० को पांचवे स्थान में रखो, फिर १ में० को जोड़ने से १ होता है इस लिये ० को छठे स्थान में रखो, परन्तु पहिले कहे हुए नियम के अनुसार यहां अन्तर की बाईं तरफ यह दो शून्य नहीं रखने चाहिये, तब उक्त संख्याओं का ९७८४ यह अन्तर हुआ।

यहां लाघव से इस तरह कहते हैं, चार के चार, ९ और ८ सत्रह के सात हासिल एक, एक और आठ नौ और सात सोलह के छ हासिल एक, एक और नौ दस और नौ उन्नीस के नौ हासिल एक, एक और नौ दस दस में दस गये बाकी कुछ नहीं। )

( २४ ) यो राशिर्धनचिन्हेन युक्तो भवेत्, अथवा तत्पूर्वं किमपि चिन्हं न भवेत्स धनराशिरुच्यते। एवमृणचिन्हाङ्कितो राशिर्ऋणराशिरभिधीयते। यत्र धनर्णचिन्हाङ्किताः कतिपयराशयो मिथः सम्बद्धा भवेयुस्तत्र तेषां मानज्ञानार्थंपूर्वं धनराशीनां सर्वेषां योगं विधाय ततः सर्वेषामृणराशीनां योगः कार्यः। अथ धनराशियोगस्यर्णराशियोगस्य चान्तरं कार्यम्। अत्रर्णराशियोगो धनराशियोगतो न्यूनश्चेदन्तरं धनं, ऋणराशियोगो धनराशियोगतोऽधिकश्चेदन्तरमृणं ज्ञेयम्। यथा, २२५—१२५+३२८—४३८, एषां माननिष्पादनाय धनराश्योः २२५, ३२८ अनयोर्योगः ५५३, एवमृणराश्योः १२५, ४३८ अनयोर्योगः ५६३ अयं धनराशियोगात् ५५३ अस्मादधिकः, अत उक्तयोगद्वयान्तरं १० इदमृणं सञ्जातम्।

( जो राशि धन चिन्ह से युक्त होता है अथवा उसके पहिले कोई चिन्ह नहीं होता है उसको धन राशि कहते हैं और जिस राशि के पहिले ऋण चिन्ह होता है उसको ऋण राशि कहते हैं। जहां धन और ऋण चिन्हों से युक्त कई राशि एक साथ मिले हुये रहते हैं वहां उनका मान निकालने के लिये पहिले सब धन राशियों का योग करो, तब जितने ऋण राशि होंगे उनका योग करो। फिर धन राशि योग का और ऋण राशि योग का अन्तर करो। यहां यदि धन राशि योग से ऋण राशि योग न्यून होगा तो अन्तर धन होगा, और यदि धन राशि योग से ऋण राशि योग अधिक होगा तो अन्तर ऋण होगा। जैसे २२५—१२५+३२८-४३८, यहां इनका मान जानने के लिये २२५, ३२८ इन धन राशियों का योग ५५३ और १२५, ४३८

इन ऋण राशियों का योग ९६३ यहां ९५३ इस धन राशि योग से ९६३ यह ऋण राशि योग अधिक होने से इन दोनों योगों का अन्तर १० यह ऋण हुआ।)

(२५) इदानीं दक्षिणक्रमेणान्तरक्रिया प्रदर्श्यते। पूर्ववद्वियोज्याधो वियोजकं स्थापयित्वा तदधो रेखा कार्या। ततो वियोजकान्तिमस्थानाङ्कोर्ध्वस्थाङ्कपर्यन्तं वियोज्यस्य वामपार्श्वस्था येऽङ्काः स्युस्तेभ्यः सर्वेभ्यो वियोजकान्तिमस्थानाङ्कं (२३) प्रक्रमानुसारं विशोध्य शेषन्तदधः स्थाप्यम्। इदमेवान्तरप्रथमस्थानं कल्प्यम्। ततो वियोजकचरमस्थानात्पूर्वस्थाने योऽङ्को भवेत्तं स्वोर्ध्वस्थाङ्काद्विशोध्य शेषन्तदधो द्वितीयस्थाने स्थाप्यम्। अत्रोर्ध्वस्थाङ्को दशभिस्संयोजितश्चेत्प्रथमस्थानाङ्काद्रूपं विशोध्यम्। पुनस्तत्पूर्वस्थानाङ्कं स्वोर्ध्वस्थाङ्काद्विशोध्य शेषन्तदधस्तृतीयस्थाने स्थाप्यम्। अत्राप्यूर्ध्वस्थाङ्को दशभिस्संयोजितश्चेद्द्वितीयस्थानीयाङ्काद्रूपं विशोध्यम्। एवं वियोज्यवियोजकयोरेकस्थानीयाङ्कपर्यन्तं कृते रेखाधो येऽङ्का भवेयुस्तदुक्तसंख्ययोरन्तरं स्यात्।

(अब बाईं तरफ से दाहिनी तरफ अन्तर करने की क्रिया को दिखलाते हैं। पहिले कहे हुए प्रकार के अनुसार वियोज्य के नीचे वियोजक को रख कर उसके नीचे एक रेखा करो। फिर वियोजक का आखिरी स्थान का जो अङ्क होगा उसके ऊपर के अङ्क तक वियोज्य की बाईं तरफ के जितने अङ्क होंगे उन सब अङ्कों में (२३) प्रक्रम के अनुसार वियोजक के आखिरी स्थान के अङ्क को घटाओ और शेष को उसके नीचे रखो। इसको अन्तर का पहिला स्थान समझो। फिर वियोजक के आखिरी स्थान से पहिले स्थान का जो अङ्क होगा उसको अपने ऊपर के अङ्क में घटा कर शेष को उसके नीचे दूसरे स्थान में रखो। यहां ऊपर के अङ्क में १० जोड़ा गया हो तो अन्तर के पहिले स्थान के अङ्क में १ को घटा दो। फिर उससे भी पहिले स्थान के वियोजक के अङ्क को अपने ऊपर के अङ्क में घटा कर शेष को उसके नीचे तीसरे स्थान में रखो। यहां पर भी ऊपर के अङ्क में १० जोड़ा गया हो तो अन्तर के दूसरे स्थान के अङ्क में १ को घटा दो। इसी प्रकार वियोज्य और वियोजक के एक स्थान के अङ्क तक करते जाओ। तब रेखा के नीचे जो अङ्क होंगे वही अभीष्ट संख्याओं का अन्तर होगा।)

उदाहरणम्। १२५८३५, ९९७४, अनयोरन्तरं कुरु।

(इनका अन्तर करो।)

१२५८३५ वियोज्यः, अत्र वियोजकान्तिमस्थानीयः ९ अयमङ्कः, एत-
  ९९७४ वियोजकः, दूर्ध्वस्थः ५ अयमङ्कः, एतदङ्कपर्यन्तं वियोज्यवा-
११५८६१ अन्तरम्, मपार्श्वस्थाः १२५ इमेऽङ्काः, एभ्यः ९ इमं वि-

शोध्य शेषं ११६ इदन्तद्योऽन्तरप्रथमस्थाने स्थाप्यम् , ततः ९ एतत्पूर्वस्थानीयस्य ९ अस्य ९ अस्य च योगः १८ अयं, अतः ९ अयं द्वितीयस्थाने स्थाप्यः, अत्रोर्ध्वस्थाङ्के ८ अस्मिन्दश योजिता अतः प्रथमस्थानीयाङ्कात् ६ अस्मात् १ रूपं वियोज्यम् , ततस्तत्पूर्वस्थानीयस्य ७ अस्याङ्कस्य ४ अस्य च योगः ११ अयं, अतः ४ अयं तृतीयस्थाने स्थाप्यः, अत्राप्यूर्ध्वस्थाङ्के १ अस्मिन्दश योजिता अतो द्वितीयस्थानीयाङ्कात् ९ अस्मात् १ रूपं वियोज्यम् , ततस्तत्पूर्वस्थानीयस्य ४ अस्याङ्कस्य १ अस्य च योगः ५ अयं, अतः १ अयं चतुर्थस्थाने स्थाप्यः, ततो जातं ११५८४१ इदमुक्तसंख्ययोरन्तरम् ।

( यहां वियोजक का अन्तिम स्थान का अङ्क ९ इसके ऊपर के ९ इस अङ्क तक वियोज्य की बाईं तरफ के १२९ यह अङ्क हैं इनमें वियोजक के अन्तिम स्थान के ९ इस अङ्क को घटा कर शेष ११६ को उसके नीचे पहिले स्थान में रखो, फिर उससे पहिले स्थान का वियोजक का अङ्क ९ इसका और ९ इसका योग १८ इस लिये ९ इसको दूसरे स्थान में रखो, यहां ऊपर के ८ इस अङ्क में १० जोड़ा गया है इस लिये पहिले स्थान के ६ इस अङ्क में १ को घटा दो, फिर उससे पहिले स्थान का अङ्क ७ इसका और ४ इसका योग ११ इस लिये ४ इस को तीसरे स्थान में रखो, यहां पर भी ऊपर के १ इस अङ्क में १० जोड़ा गया है इस लिये दूसरे स्थान के ९ इस अङ्क में १ को घटा दो, फिर उससे पहिले स्थान का अङ्क ४ इसमें १ को जोड़ने से ५ होता है इस लिये १ इसको चौथे स्थान में रखो, तब ११९८४१ यह उक्त संख्याओं का अन्तर हुआ । )

## अभ्यासार्थमुदाहरणानि (४) ।

अत्राऽन्तरं कुरु ।

( यहां अन्तर करो । )

| (१) | (२) | (३) | (४) | (५) | (६) |
|---|---|---|---|---|---|
| ७८ | ९७ | ७९५ | २१९५ | ५४०९० | ८४३२१ |
| ३५ | ४८ | ९०६ | ३९८ | ७०७३ | ५३७८९ |

| (७) | (८) | (९) | (१०) | (११) |
|---|---|---|---|---|
| २०००४ | ७८९३५६ | ७०८०९३ | ८०५४०० | ७०००२०३ |
| १७३२५ | ९९९९९ | २०५०३ | ७००५३ | ५००९५६ |

| (१२) | (१३) |
|---|---|
| ४६५७९८५३१५ | १००००००००००० |
| ३५९४७५४१५८ | ९००९०७००५४९ |

( १४ ) ७८०००४—३८९२१० ।
( १५ ) १०००९५६--३९८९७ ।
( १६ ) १४५८९७८—३९६५७९ ।

एषु प्रत्येकस्य किं मानम् ।
( इनमें हर एक का मान बताओ । )

( १७ ) ३२१ + ५४०-४२८ + ७९८-६२८
( १८ ) १९८ - ४१२ - ६२७ + १०२५ - ३४२८
( १९ ) - ४२ + २६७८ - ४५४९ + १०२८ - ५२६
( २० ) १०२८ - ५०९८१ - ४९२८१२ + २००९८ - ५०७९

( २१ ) १५०७८ अस्मिन् कस्य योजनेन ५८१३२९ इयत्स्यात् ।
( १५०७८ इसमें कितना जोड़ने से ५८१३२९ होंगे । )

( २२ ) ४२५७६८ अस्मात्कस्य विशोधनेन ६९८९९ एतावदवशिष्टं स्यात् ।
( ४२५७६८ इसमें से कितना घटाने से ६९८९९ रहेंगे । )

( २३ ) अङ्कचतुष्टयविशिष्टा लघुतमा संख्या का भवितुमर्हति, तथाङ्कत्रयवती महत्तमा संख्या का भवितुं शक्यते, उभयोरन्तरं च वद ।

( चार अङ्कों की छोटी से छोटी संख्या क्या हो सकती है, तीन अङ्कों की बडी से बड़ी संख्या क्या हो सकती है, दोनों का अन्तर बताओ । )

( २४ ) चतुर्विंशति २४ वर्षवयसि रामस्य पुत्रो जातः, यदा स एकसप्तति ७१ वर्षीयो जातस्तदा पुत्रस्य वयः कियद्भूत् ।
( राम जब २४ बरस का हुआ तब उसको पुत्र हुआ, राम की जब ७१ बरस की अवस्था हुई तब उसके पुत्र की उमर क्या थी । )

( २५ ) कस्यचिद्बालकस्य माता तत्पितुः सप्तभिवर्षैः कनीयस्यासीत्, तन्मातुरेकचत्वारिंशद् ४१ वर्षवयसि तेषां त्रयाणां वयसां

योगः शतं १०० अभूत्, तदा पुत्रस्य वयः कियदासीत्।

( किसी लडके की मां उसके पिता से ७ बरस छोटी थी, लडके की मां जब ४१ बरस की हुई तब उन तीनों की अवस्थाओं का योग १०० था, तो कहो लडके की उमर उस वक्त क्या थी। )

( २६ ) १५२४ अस्मिन्वैक्रमेऽब्दे कस्यचित्पुरुषस्य जनिरभूत्, १६०३ अस्मिन् वैक्रमाब्दे च स पञ्चत्वम्प्राप, मरणसमये तस्य वयः कियदभूत्।

( संवत् १५२४ में कोई पुरुष उत्पन्न हुआ, और संवत १६०३ में वह मर गया, तब बताओ मरने के समय उसकी अवस्था क्या थी। )

( २७ ) द्वयोस्संख्ययोर्योगः १५७६५४७, महती संख्या च १४६२४५१, अत्र लघ्वी संख्या का।

( दो संख्याओं का योग १५७६५४७ यह है, उनमें बड़ा संख्या १४६२४५१ यह है, तो छोटी संख्या को बताओ। )

( २८ ) पञ्चलक्षाणि सप्तसहस्राणि षडुत्तरशतञ्चेति संख्यां लिखेत्याकर्ण्य केनचिद्बालकेन ५००७१०६ एवं लिखितं, तदा तेन कियदधिकं लिखितम्।

( पांच लाख सात हजार एक सौ छ, इस संख्या को लिखो यह सुन कर किसी बालक ने ५००७१०६ ऐसा लिखा, तब कहो उसने कितना अधिक लिखा। )

( २९ ) कस्य चिन्नरस्य सविधे ५४० मुद्रा अधिका यद्यासन् तर्हि स अयुत १०००० मुद्राणामृणम्परिशोधयितुं समर्थोऽभूत्, तस्य नरस्य समीपे कति मुद्रा अभवन्।

( किसी पुरुषके पास ५४० रुपये अधिक होते तो वह १०००० रुपये का कर्जा अदा कर सकता था, तब बताओ उसके पास कितने रुपये थे। )

( ३० ) रामस्य धनम् १०००००, तदपेक्षया कृष्णस्य धनं ३५६७९ न्यूनम्, कृष्णस्य धनमपेक्ष्य हरेर्धनं ९७८ न्यूनं, तदा हरेर्धनप्रमाणं किं स्यात्।

( राम के पास १००००० रुपये थे, कृष्ण के पास उससे ३५६७९ रुपये कम थे, और हरि के पास कृष्ण से ९७८ रुपये कम थे, तब हरि के पास कितने रुपये थे। )

# गुणनम् ।

( २६ ) द्वयोस्संख्ययोर्द्वितीया संख्या यावती स्यात्तावद्वारम्प्रथमसंख्यां संस्थाप्य तासां सर्वासां योगो गुणनफलसंज्ञो भवति। स एव वधसंज्ञो घातसंज्ञो हतिसंज्ञश्च भवति। तयोस्संख्ययोः प्रथमसंख्या गुण्यसंज्ञिका द्वितीया च गुणकपदवाच्या भवति। तथा सङ्कलनतोऽपि लघुतर एवंविधगुणनफलज्ञानप्रकारो गुणनशब्देन व्यपदिश्यते। यथा, ७, ५, अनयोः संख्ययोः ७ इमां संख्याम्पञ्चवारं स्थापयित्वा तासां सर्वासां योगः ३५ अयम्भवतीत्यत्र गुण्यः ७ गुणकः ५ गुणनफलश्च ३५ भवति। अत्र पञ्चगुणाः सप्त पञ्चत्रिंशत्संख्या भवतीत्युच्यते।

( दो संख्याओं में दूसरी संख्या जितनी होगी उतनी बार पहिली संख्या को रख कर उन सब संख्याओं के योग को गुणनफल कहते हैं। उन दो संख्याओं में पहिली संख्या को गुण्य और दूसरी को गुणक कहते हैं। इस गुणनफल के जानने का सङ्कलन से भी लाघव का जो प्रकार होता है उसको गुणन कहते हैं। जैसे, ७, ५, इन दो संख्याओं में ७ को पांच बार लेकर उनका योग करने से ३५ होते हैं, इस लिये यहां ७ को गुण्य, ५ को गुणक और ३५ को गुणनफल कहते हैं। और यहां ७ को ५ से गुण देने से वा पांच गुना करने से ३५ होते हैं ऐसा कहा जाता है।)

( २७ ) × इदं चिह्नं गुणनकर्म द्योतयति। द्वयोः संख्ययोर्मध्ये सन्निविष्टमिदं चिन्हं तत्संख्ययोर्गुणनं सूचयति। यथा, ७×५, इदं स्वरूपम्पञ्चकसप्तकयोर्गुणनफलस्य ३५ अस्य द्योतकं भवति। अत्रत्ये च ७, ५, इमे संख्ये गुण्यगुणकरूपे प्रोच्येते।

( × यह चिह्न गुणन का द्योतक होता है। दो संख्याओं के बीच में जब यह चिन्ह रखा जाता है, तब यह चिन्ह, उन दो संख्याओं का गुणनफल करना है, इसको सूचित करता है। जैसे, ७ × ५, यह स्वरूप सात और पांच इनके गुणनफल ३५ इसको सूचित करता है। यहां ७ और ५ यह दो संख्या गुण्य और गुणक कही जाती हैं।)

( २८ ) अत्र गुणनफलस्य योगरूपत्वाद्गुणनमपि सङ्कलनभेद एव, यत्र प्रत्येकसङ्कलनीयसंख्या तुल्यरूपा भवति।

( यहां गुणनफल योग रूप होने से गुणन भी सङ्कलन ही का एक भेद है, जहां जोड़ी जाने वाली हर एक संख्या समान होती है।)

( २९ ) गुण्यगुणकयोर्गुण्यस्य गुणकत्वकल्पने गुणकस्य च गुण्यत्वकल्पनेऽपि गुणनफलन्तुल्यमेव भवति। यथा, सप्त पञ्चवारं विलिख्य तेषां योगः ३५ अयम्भवति, एवम्पञ्च सप्तवारं लिखित्वा तेषां योगोऽपि ३५ अयमेव भवति।

( गुण्य गुणकों में गुण्य को गुणक और गुणक को गुण्य कल्पना करने पर भी गुणनफल समान ही होता है। जैसे, ७ को ९ बार लिख कर उनका योग ३९ यह होता है, इसी प्रकार ९ को ७ बार लिख कर उनका योग भी ३९ यही होता है। )

( ३० ) गुण्यगुणकयोरेकतरः शून्यं यदा स्यात्, तदा तयोर्गुणनफलमपि शून्यमेव स्यात्। यथा, ५×०, अत्र पञ्चानां शून्यवारं स्थापनेन तेषामेकवारमपि स्थापनं नापेक्ष्यतइत्यर्थतोऽवगम्यते, अतोऽत्र गुणनफलं शून्यं भवति। एवं ०×५, अत्र शून्यस्पञ्चवारं स्थापयित्वा तेषां योगः शून्यं भवतीत्यत्रापि गुणनफलं शून्यमेव भवति।

( गुण्य गुणकों में कोई एक शून्य हो तो गुणनफल भी शून्य ही होता है। जैसे, ९×०, यहां ९ को शून्य बार रखने से अर्थात् एक बार भी न रखने से गुणनफल शून्य होता है। इसी तरह ०×९, यहां ० को ९ बार रखकर उनका योग करने से शून्य होता है, इस लिये यहां भी गुणनफल शून्य ही है। )

( ३१ ) काचित्संख्या दशभिर्गुण्या चेत्तस्या दक्षिणभागे शून्यस्यैकस्य स्थापनेन गुणनफलं भवति। यथा, २५×१०, अत्र २५ अस्य दक्षिणभागे शून्यस्य स्थापनेनोक्तसंख्ययोः २५० इदं गुणनफलं जातम्। एवं काचन संख्या शतसहस्रायुतप्रभृतिसंख्याभिर्गुणनीया चेत्तस्या दक्षिणपार्श्वे क्रमेण द्वित्रिचतुःप्रभृतिशून्यस्थापनेन गुणनफलानि स्युः। यथा, १५×१००, अत्र गुणनफलं १५०० इदं भवति, एवं २५×१००० अत्र गुणनफलं २५००० इदं भवति। एवमग्रेऽपि ज्ञेयम्।

( किसी संख्या को १० से गुण देना हो तो उस संख्या का दाहिनी तरफ एक शून्य लिखने से गुणनफल होता है। जैसे, २९×१०, यहां २९ इसकी दाहिनी तरफ एक शून्य लिखने से २९० यह गुणनफल हुआ। इसी तरह किसी संख्या को १००, १०००, १००००, इत्यादि संख्याओं से गुण देना हो तो उस संख्या को दाहिनी तरफ क्रम से दो, तीन, चार इत्यादि शून्य लिखने से गुणनफल होते हैं। जैसे, १९×१००, यहां १९०० यह गुणनफल होता है, और २९×१०००, यहां २९००० यह गुणनफल होता है। इसी प्रकार आगे भी जानो। )

# अथ गुणनविधिः ।

( ३२ ) यदा गुण्यगुणकावेकाङ्कविशिष्टौ स्याताम्, तदाधोलिखितचक्रे गुण्यगुणकाङ्कसम्मुखपङ्क्त्योः सम्पातकोष्ठे तयोर्गुणनफलं विद्यात् ।

गुणनफलज्ञापकं चक्रम् । (१)

गुण्याङ्काः ।

| गुणकाङ्काः । | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| १ | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| २ | ० | २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | १८ |
| ३ | ० | ३ | ६ | ९ | १२ | १५ | १८ | २१ | २४ | २७ |
| ४ | ० | ४ | ८ | १२ | १६ | २० | २४ | २८ | ३२ | ३६ |
| ५ | ० | ५ | १० | १५ | २० | २५ | ३० | ३५ | ४० | ४५ |
| ६ | ० | ६ | १२ | १८ | २४ | ३० | ३६ | ४२ | ४८ | ५४ |
| ७ | ० | ७ | १४ | २१ | २८ | ३५ | ४२ | ४९ | ५६ | ६३ |
| ८ | ० | ८ | १६ | २४ | ३२ | ४० | ४८ | ५६ | ६४ | ७२ |
| ९ | ० | ९ | १८ | २७ | ३६ | ४५ | ५४ | ६३ | ७२ | ८१ |

यथा, पञ्चकाष्टकयोर्गुणनफले ज्ञातव्ये पञ्चकाष्टकरूपगुण्यगुणकाङ्कसम्मुखपङ्क्तिसम्पातकोष्ठे ४० वर्तन्ते, अतः पञ्चकाष्टकयोः ४० इदं गुणनफलं भवति । एतच्चक्रस्थगुणनफलान्यवश्यं कण्ठगतानि कार्याणि ।

( जब गुण्य और गुणक में एक अङ्क होता है अर्थात् वे दोनो १० से छोटे होते हैं, तब नीचे लिखे चक्र में गुण्याङ्क के नीचे और गुणकाङ्क के सामने की पङ्क्ति में जो संख्या होगी वही उन दो अङ्कों का गुणनफल होता है । जैसे, ५ और ८ इन दो अङ्कों का गुणनफल जानना है, तब ५ के नीचे और ८ के सामने की पङ्क्ति में ४० हैं, इस लिये ५ और ८ का गुणनफल ४० यह है । इस चक्र में के गुणनफलों को अवश्य कण्ठ करना चाहिये । )

## गुणनफलज्ञापकं चक्रम् (२)

गुण्याङ्काः ।

| गुणकाङ्काः । | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ |
| २ | २० | २२ | २४ | २६ | २८ | ३० | ३२ | ३४ | ३६ | ३८ |
| ३ | ३० | ३३ | ३६ | ३९ | ४२ | ४५ | ४८ | ५१ | ५४ | ५७ |
| ४ | ४० | ४४ | ४८ | ५२ | ५६ | ६० | ६४ | ६८ | ७२ | ७६ |
| ५ | ५० | ५५ | ६० | ६५ | ७० | ७५ | ८० | ८५ | ९० | ९५ |
| ६ | ६० | ६६ | ७२ | ७८ | ८४ | ९० | ९६ | १०२ | १०८ | ११४ |
| ७ | ७० | ७७ | ८४ | ९१ | ९८ | १०५ | ११२ | ११९ | १२६ | १३३ |
| ८ | ८० | ८८ | ९६ | १०४ | ११२ | १२० | १२८ | १३६ | १४४ | १५२ |
| ९ | ९० | ९९ | १०८ | ११७ | १२६ | १३५ | १४४ | १५३ | १६२ | १७१ |
| १० | १०० | ११० | १२० | १३० | १४० | १५० | १६० | १७० | १८० | १९० |

(३३) यद्यपि पूर्वचक्रेणैव सकलगुणनक्रियानिर्वाहो भवितुं शक्यस्तथापि गुणने भागहारे च लाघवेन फलसाधनायैतद्द्वितीयचक्रस्थगुणनफलान्यप्यवश्यं कण्ठगतानि कार्याणि ।

( यद्यपि पहिले चक्र से ही सब गुणन की क्रिया का निर्वाह हो सकता है, तथापि गुणन में और आगे भागहार में लाघव से फल सिद्ध करने के लिये इस दूसरे चक्र के गुणनफलों को भी अवश्य कण्ठ करना चाहिये । )

(३४) यदा गुण्योऽनेकाङ्कविशिष्टो गुणकश्चैकतएकोनविंशतिपर्यन्तं यः कोऽप्यङ्को भवेत्तदा तयोर्गुणनफले ज्ञातव्ये गुण्यस्यैकस्थानाङ्काधो गुणकं निवेश्य तदधो रेखा कार्या । ततो गुणकगुण्यैकस्थानाङ्कयोर्वधस्य दक्षिणपार्श्वस्थमङ्कमिष्टगुणनफलस्याद्यस्थाने विलिख्य तद्वामपार्श्वस्थाङ्केन युतस्य गुणकगुण्यदशस्थानाङ्कयोर्वधस्य दक्षिणपार्श्वस्थमङ्कमिष्टगुणनफलस्य द्वितीयस्थाने विलिखेत् । एवं गुण्यस्यान्तिमस्थानाङ्कं यावत्कार्यम् । अन्ते यो योगः स्यात्स स्ववामपार्श्वस्थाङ्कसहित एवेष्टगुणनफलस्यान्तिमस्थाने स्थाप्यः । एवं रेखाधो येऽङ्काः स्युस्तदेवेष्टगुणनफलं स्यात् ।

( जब गुण्य में अनेक अङ्क होते हैं और गुणक एक से उन्नीस तक का कोई अङ्क होता है तब उनका गुणन करने में, गुण्य के एक स्थान के अङ्क के नीचे गुणकको रख कर उनके नीचे एक रेखा करो तब गुण्य के एक स्थान के अङ्क को गुणक से गुण दो, जो फल होगा उसकी दाहिनी तरफ के अङ्क को गुणनफल के प्रथम स्थान में रखो। और बाईं तरफ के अङ्क को हासिल का अङ्क समझो। फिर गुण्य के दश स्थान के अङ्क को गुणक से गुण कर फल में हासिल के अङ्क को जोड़ दो। इस जोड़ की दाहिनी तरफ के अङ्क को गुणनफल के दूसरे स्थान में रख कर बाईं तरफ के अङ्क को हासिल का अङ्क समझो। इसी प्रकार गुण्य के आखिरी स्थान के अङ्क तक करो। अन्त में जो जोड़ होगा उसको अपने हासिल के अङ्क के साथ ही गुणनफल के आखिरी स्थान में रखो। तब रेखा के नीचे जो संख्या होगी वही अभीष्ट गुणनफल होगा।)

उदाहरणम्। ५४३९, १२, अनयोर्गुणनफलं वद। )

( इनका गुणनफल क्या होता है, उसको कहो )

५४३९ गुण्यः,
१२ गुणकः,
६५२६८ गुणनफलम्,

अत्र ९, १२, अनयोर्वधः १०८ अस्य दक्षिणपार्श्वस्थं ८ इममङ्कं गुणनफलाद्यस्थाने निवेश्य वामपार्श्वस्थाङ्कद्वयस्य १० अस्य ३, १२, एतयोर्वधस्य च योगः ४६ अस्य दक्षिणपार्श्वस्थः ६ अयमङ्को गुणनफलद्वितीयस्थाने स्थाप्यः, वामपार्श्वस्थस्य ४ अस्य, ४, १२ अनयोर्वधस्य च योगः ५२ अस्य दक्षिणपार्श्वस्थः २ अयमङ्को गुणनफलतृतीयस्थाने निवेश्यः, वामपार्श्वस्थस्य ५ अस्य ५, १२ अनयोर्वधस्य च योगः ६५ अयं स्ववामपार्श्वस्थाङ्केन ६ अनेन सहित एव गुणनफलस्य चतुर्थस्थाने स्थाप्यः।

( यहां १२, और ९ का गुणनफल या १२ नवां १०८ में ८ को गुणनफल के पहिले स्थान में रखो, और १० को हासिल समझो, फिर १२ और ३ का गुणनफल या १२ तियां ३६ और १० मिल कर ४६ में ६ को गुणनफल के दूसरे स्थान में रखो और हासिल ४, फिर १२ और ४ का गुणनफल या १२ चौके ४८ और ४ मिल कर ५२ में २ को गुणनफल के तीसरे स्थान में रखो और हासिल ५, फिर १२ और ५ का गुणनफल या १२ पंजे ६० और ५ मिलकर ६५ को गुणनफल के चौथे स्थान में रखो। यहां इस तरह कहते हैं, बारह नवां एक सौ आठ के आठ हासिल दस, बा-

रह तियां छत्तिस और दस छियालीस के छ हासिल चार, बारह चौके अड़तालीस और चार बावन के दो हासिल पांच, बारह पंजे साठ और पांच पैंसठ के पैंसठ।)

(३५) यदा गुण्यगुणकावनेकाङ्कविशिष्टौ स्यातां तदा तयोर्गुणनफले ज्ञातव्ये, गुण्यस्यैकादिस्थानाङ्कानामधस्ताद्गुणकस्यैकादिस्थानाङ्कान् क्रमशो निवेश्य तदधो रेखा कार्या। अथ गुणकैकस्थानाङ्केन (३४) प्रक्रमानुसारं सकलं गुण्यं संगुण्य गुणनफलस्यैकादिस्थानाङ्कान् रेखाधः क्रमेण गुणकस्यैकादिस्थानाङ्कानामधस्ताद्विन्यसेत्। ततो गुणकस्य दशस्थानाङ्केन सकलं गुण्यं संगुण्य गुणनफलस्यैकादिस्थानाङ्का गुणकस्य दशशतादिस्थानाङ्कानामधस्तात्क्रमशः पूर्वगुणनफलस्याधस्तनपङ्क्तौ निवेश्याः। एवं येन गुणकाङ्केन सकलगुण्यो गुणितस्तस्यैवाधस्ताद्गुणनफलस्यैकस्थानाङ्कन्तत्पूर्वगुणनफलस्याधस्तनपङ्क्तौ विन्यस्य तद्वामभागे तद्दशशतादिस्थानाङ्काः स्थाप्याः। एवमेव गुणकस्यान्तिमस्थानान्तं यावत्कृते रेखाधो यानि गुणनफलानि स्युस्तेषां सर्वेषामधस्तादन्यां रेखां कृत्वा सर्वगुणनफलयोगो द्वितीयरेखाधः स्थाप्यः। ततो द्वितीयरेखाधो या संख्या भवेत्तदेवोक्तसंख्ययोर्गुणनफलं स्यात्। एवं गुणकाङ्कमध्य एकं शून्यं द्वित्र्यादीनि वा शून्यान्यानुपूर्व्येण यदि स्युस्तर्हि शून्येन गुण्ये गुणिते (३०) प्रक्रमानुसारं गुणनफलं शून्यमेव भवतीति तत्तद्गुणनफलस्थाने किञ्चिदप्यविलिख्योक्तवत्सर्वं गुणनं कार्यम्।

(जब गुण्य और गुणक में अनेक अङ्क होते हैं तब उनका गुणन करने के लिये गुणक के एक दश आदि स्थानों के अङ्कों को गुण्य के एक दश आदि स्थानों के अङ्कों के नीचे क्रम से लिख कर उनके नीचे एक रेखा करो। तब (३४) प्रक्रम के अनुसार गुणक के एक स्थान के अङ्क से सब गुण्य को गुण कर गुणनफल के एक, दश आदि स्थानों के अङ्कों को रेखा के नीचे क्रम से गुणक के एक दश आदि स्थानों के अङ्कों के नीचे रखो। तब गुणक के दश स्थान के अङ्क से सब गुण्य को गुण कर गुणनफल के एक, दश आदि स्थानों के अङ्कों को पहिले गुणनफल के नीचे की पंक्ति में गुणक के दश, शत आदि स्थानों के अङ्कों के नीचे क्रम से रखो। इसी प्रकार जिस गुणक के अङ्क से सब गुण्य को गुणा गया हो उसी अङ्क के नीचे गुणनफल के एक स्थान के अङ्क को उसके पहिले के गुणनफल के नीचे की पंक्ति में रख कर उसकी बाईं तरफ उसके दश, शत आदि स्थानों के अङ्कों को रखो। इसी तरह गुणक के आखिरी स्थान के अङ्क तक

करने पर रेखा के नीचे जो गुणन फल होंगे उनके नीचे दूसरी रेखा खींच कर उन सब गुणनफलों के योग को दूसरी रेखा के नीचे रखो । तब इस दूसरी रेखा के नीचे जो संख्या होगी वही उक्त संख्याओं का गुणनफल होगा। यदि गुणक के अङ्कों के बीच में एक शून्य अथवा निरन्तर दो तीन आदि शून्य हों तो ( ३० ) प्रक्रम के अनुसार शून्य और गुण्य इनका गुणनफल शून्य होने से गुणन फल के स्थान में कुछ न लिख कर पहिले कहे हुए प्रकार के अनुसार आगे सब गुणन करो । )

उदाहरणम् (१) २५३८४, ४३२५, अनयोर्गुणनफलं वद ।

( इनका गुणनफल कहो । )

२५३८४ गुण्यः,
४३२५ गुणकः,
१२६९२०
५०७६८
७६१५२
१०१५३६
१०९७८५८०० गुण.फ.,

अत्र गुणकैकस्थानाङ्केन ५ अनेन सकलं गुण्यं संगुण्य गुणनफलस्यैकादिस्थानाङ्का गुणकस्यैकादिस्थानाङ्कानामधस्तात्क्रमेण स्थाप्याः, ततो गुणकदशस्थानाङ्कस्य २ अस्य गुण्यस्य च वधं कृत्वा तदेकादिस्थानाङ्का गुणकस्य दशशतादिस्थानाङ्कानामधस्तात्पूर्वगुणनफलाधस्तनपङ्क्तौ क्रमेण स्थाप्याः, ततो गुणकशतस्थानाङ्कस्य ३ अस्य गुण्यस्य च घातं कृत्वा तदेकादिस्थानाङ्का गुणकस्य शत, सहस्रादिस्थानाङ्कानामधस्ताद्द्वितीयगुणनफलाधस्तनपङ्क्तौ क्रमेण स्थाप्याः, ततो गुणकसहस्रस्थानाङ्केन ४ अनेन गुण्यं संगुण्य गुणनफलस्यैकादिस्थानाङ्का गुणकस्य सहस्रादिस्थानाङ्कानामधस्तात्तृतीयगुणनफलाधस्तनपङ्क्तौ क्रमेण स्थाप्याः, ततः सर्वगुणनफलाधो रेखां कृत्वा तद्रेखाधस्तेषां योगः स्थाप्यः ।

( यहां गुणक का एक स्थान का अङ्क ९ इससे गुण्य को गुण कर गुणनफल के एक आदि स्थानों के अङ्कों को गुणक के एक आदि स्थानों के अङ्कों के नीचे क्रमसे रखो, तब गुणक का दशस्थान का अङ्क २ इससे गुण्य को गुण कर गुणन फल के एक आदि स्थानों के अङ्कों को गुणक के दश आदि स्थानों के अङ्कों के नीचे पहिले गुणनफल के नीचे की पंक्ति में क्रम से लिखो, तब गुणक का शतस्थान का अङ्क ३ इससे गुण्य को गुण कर गुणनफल के एक आदि स्थानों के अङ्कों को गुणक के शत आदि स्थानों के अङ्कों के नीचे दूसरे गुणनफल के नीचे की पंक्ति में क्रम से लिखो, फिर गुणक का सहस्र स्थान का अङ्क ४ इससे गुण्य को गुण कर गुणनफल के एक आदि स्थानों के

अङ्कों को गुणक के सहस्र आदि स्थानों के अङ्कों के नीचे तीसरे गुणनफल के नीचे की पंक्ति में क्रम से लिखो, तब सब गुणनफलों के नीचे एक रेखा खींच कर उनके योग को उस रेखा के नीचे लिखो।)

उदाहरणम् (२) ५९२८१, ८००३; अनयोर्गुणनफलम्ब्रूहि।

(इनका गुणनफल कहो।)

| | |
|---|---|
| ५९२८१ गुण्यः, | |
| ८००३ गुणकः, | |
| १७७८४३ | |
| ४७४२५८ | |
| ४७४४२५८४३ गुण. फ., | |

अत्र ३ अनेन गुण्यं संगुण्य गुणनफलस्यैकादिस्थानाङ्का गुणकस्यैकादिस्थानाङ्कानामधस्तात्क्रमेण स्थाप्याः, ततोऽत्र शून्यद्वयगुणनफलस्थानयोर्न किमपि लेख्यम्, ततश्च गुणकसहस्रस्थानाङ्केन ८ अनेन गुण्यं संगुण्य गुणनफलस्यैकादिस्थानाङ्काः पूर्वगुणनफलाधस्तनपङ्क्तौ गुणकस्य सहस्रादिस्थानाङ्कानामधस्तात्क्रमेण स्थाप्याः, ततस्तदधो रेखां कृत्वा गुणनफलद्वययोगो रेखाधः स्थाप्यः।

(यहां ३ इससे गुण्य को गुण कर गुणनफल के एक आदि स्थानों के अङ्कों को गुणक के एक आदि स्थानों के अङ्कों के नीचे क्रम से लिखो, तब यहां दो शून्यों के गुणनफलों के स्थानों में कुछ न लिखो, फिर गुणक के सहस्र स्थान के ८ इस अङ्क से गुण्य को गुण कर गुणनफल के एक आदि स्थानों के अङ्कों को गुणक के सहस्र आदि स्थानों के अङ्कों के नीचे पहिले गुणनफल के नीचे की पङ्क्ति में क्रम से लिखो, तब उनके नीचे एक रेखा खींच कर उन दो गुणनफलों के योग को रेखा के नीचे लिखो।)

(३६) यदा गुण्यस्य गुणकस्योभयोर्वाऽऽदौ कतिचिच्छून्यानि स्युस्तदा लाघवार्थमादिमशून्यरहितगुण्यगुणकयोः पूर्वप्रकारेण कृतस्य वधस्यादौ गुण्यगुणकादिस्थशून्यानि विन्यसेत्। एतदेव गुणनफलं स्यात्।

(जब गुण्य और गुणक इन दोनों में किसी एक के वा दोनों के ऊपर कुछ शून्य होते हैं, तब लाघव के लिये उन सब शून्यों को छोड कर बचे हुए गुण्य गुणकों का पहिले गुणनफल करो। फिर गुण्य गुणकों में किसी एक के वा दोनों के मिल कर जितने शून्य छोड दिये गये हों उतने शून्यों को उस गुणनफल के ऊपर लिख दो। यही पूरा गुणनफल होगा।)

उदाहरणम् । ५८००, ४५०, अनयोर्गुणनफलं कुरु ।

( इनका गुणनफल करो । )

५८०० गुण्यः,
४५० गुणकः,
२९०
२३२
२६१०००० गुण. फ.,

अत्र गुण्यगुणकयोरादिमं शून्यत्रयम्परित्यज्य ५८, ४५, अनयोरवशिष्टगुण्यगुणकयोर्वधस्य २६१० अस्योपरि शून्यत्रयं निवेश्यम् ।

( यहां गुण्य गुणकों के उपर के तीन शून्यों को छोड कर बचे हुए ५८, ४५ इन गुण्य गुणकों का घात २६१० इस के ऊपर तीन शून्य रख दो, यही पूरा गुणनफल होगा । )

( ३७ ) द्व्यधिकसंख्यानां गुणनमपेक्षितं चेत्पूर्वं संख्याद्वयस्य गुणनं कृत्वा तद्गुणनफलं तृतीयसंख्यया गुणनीयम् । तत एतद्गुणनफलं चतुर्थसंख्यया गुण्यम् । एवमग्रेऽपि कृतेऽन्ते यद्गुणनफलं भवेत्तदेवोद्दिष्टसंख्यानां गुणनफलं स्यात् ।

( दो से अधिक संख्याओं का गुणनफल करना हो तो उनमें से कोई दो संख्याओं का पहिले गुणनफल कर के उस गुणनफल को तीसरी संख्या से गुण दो । फिर इस गुणनफल को चौथी संख्या से गुण दो । इस प्रकार आगे करने पर अन्त में जो गुणनफल होगा वही अभीष्ट संख्याओं का गुणनफल होगा । )

उदाहरणम् । ३२×५१×४३, अस्य किम्मानम् ।

( इसका मान क्या है । )

३२ गुण्यः,
५१ गुणकः,
३२
१६०
१६३२ गुण्यः,
४३ गुणकः,
४८९६
६५२८
७०१७६ गुण. फ.,

अत्र ३२, ५१ अनयोर्गुणनफलं १६३२ अस्य ४३ अस्य च वधः ७०१७६, अतः ७०१७६ इदमुक्तसंख्यानां गुणनफलं जायते ।

( यहां ३२, ५१ इनका गुणनफल १६३२ इसका और ४३ इसका घात ७०१७६, इस लिये उक्त संख्याओं का ७०१७६ यह गुणनफल होता है । )

(३८) गुणकस्यैकदशशतादिस्थानाङ्कैर्गुण्यस्य गुणने क्रमो नापेक्ष्यते। व्युत्क्रमेण यथेष्टं गुणकाङ्कैर्गुण्ये गुणितेऽपि तत्तद्गुणनफलानां यथास्थानं सन्निवेशेनैवाभीष्टं गुणनफलं सम्पद्यते।

(गुणक के एक, दश, शत आदि स्थानों के अङ्कों से गुण्य को क्रम से गुण देने की आवश्यकता नहीं होती है। चाहे जिस क्रम से गुण्य को गुणक के अङ्कों से गुण देने पर भी गुणनफलों को ठीक ठीक अपने अपने स्थानों पर रखने से ही अभीष्ट गुणनफल सिद्ध हो सकता है।)

उदाहरणम्। ५४२, ३१९, अनयोर्गुणनफलमुच्यताम्।

(इनका गुणनफल कहो।)

५४२ गुण्यः,
३१९ गुणकः,
४८७८
५४२
१६२६
१७२८९८ गु. फ.,

५४२ गुण्यः,
३१९ गुणकः,
५४२
१६२६
४८७८
१७२८९८ गु. फ.,

अत्र पूर्वं गुणकदशस्थानाङ्केन १ अनेन गुण्यं संगुण्य गुणनफलं १ अस्याधस्तनस्थानमारभ्य स्थाप्यम्, ततो गुणकशतस्थानाङ्केन ३ अनेन गुण्यं संगुण्य वधः ३ अस्याधस्तनस्थानमारभ्य स्थाप्यः, ततो गुणकैकस्थानाङ्केन ९ अनेन गुण्यं संगुण्य घातः ९ अस्याधस्तनस्थानमारभ्य स्थाप्यः, ततस्सर्वेषां गुणनफलानां योगे कृतेऽभीष्टं गुणनफलं सम्पद्यते।

(यहां पहिले गुणक का दश स्थान का अङ्क १ इससे गुण्य को गुण कर गुणनफल को १ इसके नीचे से रखना शुरू करो, तब गुणक का शत स्थान का अङ्क ३ इससे गुण्य को गुणकर गुणनफल को ३ इसके नीचे से रखना शुरू करो, फिर गुणक का एक स्थान का अङ्क ९ इससे गुण्य को गुण कर गुणनफल को ९ इसके नीचे से रखना शुरू करो, तब इन सब गुणनफलों का योग करने से अभीष्ट गुणनफल सिद्ध होता है।)

(३९) अथ प्रकारान्तरेण गुणनमुच्यते। गुणकस्य यथेप्सितान्येवं विधानि खण्डानि कार्याणि, येषां योगो गुणकतुल्यः स्यात्। ततः प्रत्येकखण्डेन गुण्यं गुणयित्वा सर्वेषां गुणनफलानां योगोऽभीष्टसंख्ययोर्गुणनफलं स्यात्। किञ्चात्र गुणकस्य तथा खण्डानि कार्याणि यथा गुणने सौकर्यं स्यात्।

(अब प्रकारान्तर से गुणन कहते हैं। गुणक के ऐसे खण्ड करो, जिनका योग

गुणक के तुल्य होगा। तब हर एक खण्ड से गुण्य को गुण कर उन सब गुणनफलों का जो योग होगा वही अभीष्ट संख्याओं का गुणनफल होगा। यहां गुणक के ऐसे खण्ड करने चाहिये जिन से गुणन में कुछ लाघव हो सके।)

उदाहरणम्। २१३४, २१५, अनयोर्गुणनफलं वद।

( इनका गुणनफल कहो। )

२१३४ गुण्यः, २१३४ गुण्यः, २१३४ गुण्यः,
२०० गुणकः, १० गुणकः, ५ गुणकः,
४२६८०० गु. फ., २१३४० गु. फ., १०६७० गु. फ.,

४२६८००
२१३४०
१०६७०
४५८८१० योगः,

अत्र २१५ अस्य २००+१०+५, एवं विधानि खण्डानि कृत्वा प्रत्येकखण्डेन गुण्ये गुणिते जातानि गुणनफलानि ४२६८००, २१३४०, १०६७० एषां योगः ४५८८१० इदमुक्तसंख्ययोर्गुणनफलं सम्पद्यते।

( यहां २१५ इसके २००+१०+५, ऐसे खण्ड कर के प्रत्येक खण्ड से गुण्य को गुण देने से ४२६८००, २१३४०, १०६७० यह गुणनफल हुए, इनका योग ४५८८१० यही उक्त संख्याओं का गुणनफल हुआ। )

( ४० ) अथवा, गुणकस्यैतादृशे खण्डे विधेये, ययोरन्तरं गुणकतुल्यं स्यात्। ततः प्रत्येकखण्डेन गुण्यं संगुण्य गुणनफलयोरन्तरमभीष्टसंख्ययोर्गुणनफलं स्यात्।

( अथवा, गुणक के ऐसे दो खण्ड करो, जिनका अन्तर गुणक के तुल्य होगा। तब हर एक खण्ड से गुण्य को गुण कर दोनों गुणनफलों का जो अन्तर होगा वही अभीष्ट संख्याओं का गुणनफल होगा। )

उदाहरणम्। ३२५, १५, अनयोर्गुणनफलं किं स्यात्।

( इनका गुणनफल क्या होगा। )

३२५ गुण्यः, ३२५ गुण्यः,
२० गुणकः, ५ गुणकः,
६५०० गु. फ., १६२५ गु. फ.,

६५००
१६२५
४८७५ अन्तरम्,

अत्र १५ अस्य २०-५, एवंविधं खण्डद्वयं कृत्वा प्रत्येकखण्डेन गुण्ये गुणिते जाते गुणनफले ६५००, १६२५, अनयोरन्तरं ४८७५ इदमभीष्टसंख्ययोर्गुणनफलं सम्पन्नम्।

( यहां १९ इसके २०–९, ऐसे दो खण्ड करके प्रत्येक खण्ड से गुण्य को गुण देने से ६५००, १६२५ यह दो गुणनफल हुए, इनका अन्तर ४८७५ यही उक्त संख्याओं का गुणनफल हुआ। )

( ४१ ) अथवा, सति सम्भवे गुणकस्यैवंविधानि खण्डान्यनुष्ठेयानि, यद्गुणनफलं गुणकतुल्यं भवेत्। ततस्तेष्वेकतमेन केनचित्खण्डेन गुण्यं संगुण्य गुणनफलं द्वितीयेन खण्डेन गुणनीयम्। ततस्तद्गुणनफलं तृतीयखण्डेन गुणनीयम्। एवमग्रेऽपि कृतेऽन्ते यद्गुणनफलं स्यात्तदेवाभीष्टसंख्ययोर्गुणनफलं स्यात्।

(अथवा, सम्भव हो तो गुणक के ऐसे खण्ड करो, जिनका गुणनफल गुणक के तुल्य होगा। तब उनमें से किसी एक खण्ड से गुण्य को गुण कर गुणनफल को दूसरे खण्ड से गुण दो। फिर उस गुणनफल को तीसरे खण्ड से गुण दो। ऐसा ही आगे करने पर अन्त में जो गुणनफल होगा, वही उक्त संख्याओं का गुणनफल होगा। )

उदाहरणम्। ४३५, ४२, अनयोर्गुणनफलम्ब्रूहि।

( इनका गुणनफल कहो। )

| | |
|---|---|
| ४३५ गुण्यः, | अत्र ४२ अस्य ७×३×२, एवंविधं खण्डत्रयं कृत्वा |
| ७ गुणकः, | ४३५ अस्य ७ अस्य च गुणनफलं ३०४५ अस्य ३ |
| ३०४५ गुण्यः, | अस्य च वधः ९१३५ पुनरस्य २ अस्य च घातः |
| ३ गुणकः, | १८२७० इदमेवोक्तसंख्ययोर्गुणनफलं जातम्। |
| ९१३५ गुण्यः, | ( यहां ४२ इसके ७×३×२, ऐसे तीन खण्ड करके ४३५ |
| २ गुणकः, | इसका और ७ इसका घात ३०४५ इसका और ३ इसका |
| १८२७० गु. फ., | घात ९१३५ फिर इसका और २ इसका घात १८२७० |
| | यही उक्त संख्याओं का गुणनफल हुआ। ) |

( ४२ ) अथ गुणनफलशुद्ध्यशुद्धिज्ञानोपायः प्राचीनाचार्योक्तः प्रदर्श्यते। गुण्यगुणकगुणनफलेषु प्रत्येकस्यैकदशकादिस्थानाङ्कानां योगः कार्यः। अस्मिन्योगेऽङ्कद्वयं चेत्तयोरङ्कयोरपि योगः कार्यः। एवन्तावत्कार्यं यावदेकएवाङ्को योगे स्यात्। एवमयं योगाङ्को गुण्यैकाङ्कः, गुणकैकाङ्कः, गुणनफलैकाङ्कश्च क्रमेण भवति। अथ गुणकैकाङ्केन गुण्यैकाङ्को गुणनीयः। अस्मिन् गुणनफलेऽङ्कद्वयं चेत्तयोरङ्कयोर्योगः कार्यः। अयं योगैकाङ्को गुणनफलैकाङ्कतुल्यश्चेद्गुणनफलं शुद्धं, अन्यथाऽशुद्धमिति ज्ञेयम्।

( अब प्राचीन आचार्यों ने कहा हुआ गुणनफल जांचने का प्रकार दिखलाते हैं। गुण्य, गुणक और गुणनफल इन तीनों में हर एक के एक, दश आदि स्थानों के अङ्कों का योग करो। यदि इस योग में दो अङ्क हों तो उन दो अङ्कों का भी योग करो। ऐसा तब तक करो जब तक योग में एक अङ्क रहेगा। इस योग के अङ्क को क्रम से गुण्यैकाङ्क, गुणकैकाङ्क और गुणनफलैकाङ्क कहते हैं। फिर गुण्यैकाङ्क को गुणकैकाङ्क से गुण दो। इस गुणनफल में दो अङ्क हों तो उन दो अङ्कों का योग करो। यह योग का अङ्क गुणनफलैकाङ्क के समान हो तो गुणनफल शुद्ध होगा। यदि समान न होगा तो गुणनफल को अशुद्ध समझो। )

यथा, गुण्यः ७३५४, गुणकः २६३, गुणनफलं २१५४७२२, अत्र गुण्याङ्काः ७, ३, ५, ४ एषां योगः १९ अत्राङ्कद्वयमस्ति, अतः १, ९ अनयोर्योगः १० अत्राप्यङ्कद्वयं वर्तते, अतः १, ० अनयोर्योगः १ अयं गुण्यैकाङ्को जातः, एवं गुणकस्याङ्काः २, ६, ३ एषां योगः १४ अत्राङ्कद्वयसत्वात् १, ४ अनयोर्योगः ५ अयं गुणकैकाङ्को जातः, एवमेव गुणनफलाङ्काः २, १, ५, ४, ७, २, २ एषां योगः २३ अत्राङ्कद्वयसत्वात् २, ३ अनयोर्योगः ५ अयं गुणनफलैकाङ्कः संजातः, ततो गुण्यैकाङ्कस्य १ अस्य गुणकैकाङ्कस्य ५ अस्य च घातः ५ अयमङ्को गुणनफलैकाङ्केन ५ अनेन तुल्यो वर्तते, अतः पूर्वोक्तं गुणनफलं शुद्धमस्ति।

( जैसे, गुण्य ७३५४, गुणक २९३, गुणनफल २१५४७२२, यहां गुण्य के अङ्क ७, ३, ५, ४ इनका योग १९ यहां दो अङ्क होने से १, ९ इनका योग १० इसमें भी दो अङ्क होने से १, ० इनका योग १ यह गुण्यैकाङ्क हुआ, इस प्रकार गुणक के अङ्क २, ९, ३ इनका योग १४ इसमें दो अङ्क होने से १, ४ इनका योग ५ यह गुणकैकाङ्क हुआ, इसी प्रकार गुणनफल के अङ्क २, १, ५, ४, ७, २, २ इनका योग २३ इसमें दो अङ्क होने से २, ३, इनका योग ५ यह गुणनफलैकाङ्क हुआ, अब गुण्यैकाङ्क १ इसका और गुणकैकाङ्क ५ इसका घात ५ यह अङ्क गुणनफलैकाङ्क ५ इसके समान है, इस लिये उक्त गुणनफल शुद्ध है। )

## अभ्यासार्थमुदाहरणानि ( ५ )। X

अधोलिखितप्रश्नेषु प्रत्येकस्य गुणनफलमुच्यताम्।

( नीचे लिखे हर एक प्रश्न में जो गुणनफल होगा उसको कहो। )

( १ ) ६५३×४५ ( २ ) ७०३×७६ ( ३ ) ८५०×६६ ( ४ ) २७६४ ×५३२ ( ५ ) ६०२७×२७५ ( ६ ) ४८३६×७२० ( ७ ) २८६३×६००४

( ८ ) ६५४३२×९०७०१ ( ९ ) ४०७०५×१०८०४ ( १० ) ९६५४०० ×५०४०० ( ११ ) ९३००८७×७००१७ ( १२ ) ८४०७५०×१७९०६ ( १३ ) ७८५४०२५×५०००२९ ( १४ ) ७२८०२६०×८००७००० ( १५ ) ७८५४३२०×२५६७२४० ( १६ ) ९०१०४०×३००५००७००

एषु प्रत्येकस्य किम्मानम् ।

( इनमें हर एक का मान क्या है । )

( १७ ) ३९×७×९ ( १८ ) ९०४×७८५×६९८ ( १९ ) ९७× ८५×४६×५ ( २० ) ७९×६८×२५×८४

( २१ ) यदि १४ आम्रफलानां मूल्यमेकः पणः स्याचर्हि ३०९ पणैः कियन्त्याम्रफलानि लभ्येरन् ।

( एक पैसे में १४ आम मिलते हैं तो ३०९ पैसे के कितने आम मिलेंगे । )

( २२ ) एकस्य रूप्यकस्य यदि ६४ पणा भवन्ति तर्हि ५०८८९ रूप्यकाणां कियन्तः पणा भवेयुः ।

( एक रुपये के ६४ पैसे होते हैं तब ५०८८९ रुपयों के कितने पैसे होंगे । )

( २३ ) एकस्मिन्वर्षे ३६५ दिनानि भवन्ति, ३६०९०८ वर्षाणां कियन्ति दिनानि ।

( एक साल में ३६५ दिन होते हैं तब ३६०९०८ साल के कितने दिन होंगे । )

( २४ ) कस्य चित्पण्डितस्य समीपे किमप्येकं बृहत्पुस्तकमभूत, तत्र ९०७ अध्याया आसन्, प्रत्येकाध्याये १०५०२५ पत्राण्यभूवन्, तदा सकलपुस्तकपत्रसंख्यां वद ।

( किसी पण्डित के पास एक बड़ा पुस्तक था, उसमें ९०७ अध्याय थे, और हर एक अध्याय में १०५०२५ पत्र थे, तब उस पुस्तक के पत्रों की संख्या क्या थी । )

( २५ ) एको धूम्रशकट एकस्मिन्दिने ११०९ क्रोशमितमार्गं यातुं समर्थः, ९०५९८ दिवसैः कियत्क्रोशमितमध्वानं गन्तुं स शक्तः स्यात् ।

( एक रेलगाड़ी एक दिन में ११०९ कोस चल सकती है, तब ९०५९८ दिनों में कितने कोस वह चल सकेगी । )

( २६ ) एकस्मिन् छात्रावासे १२५० छात्रा निवसन्ति, तेषु प्रत्येकछात्रस्य १३५ मुद्रापरिमितो वार्षिकव्ययो यदि भवति तर्हि १२ वर्षेषु तेषां छात्राणां व्ययः कियान् ।

( किसी बोर्डिंग हाउस में १२५० लड़के रहते हैं, हर एक लड़के के सालाना खर्च में १३९ रुपये लगते हैं, तब बारह बरस में उन सब लड़कों के कितने रुपये खर्च होंगे । )

( २७ ) कस्यचिद्वणिजो द्वार्येको भिक्षुकवर्गः समागतः, तत्र ४०५ पुरुषाः, ३१८ स्त्रियः, ५६८ बालकाश्चासन, तेन वणिजा प्रतिपुरुषं, प्रतिस्त्रि, प्रतिबालकञ्च क्रमेण २९, २३, १६ पणाः प्रदत्ताः, तस्मिन्दिने तेन कति पणा वितीर्णाः ।

( किसी बनिये के दरवाजे पर एक याचकों का समूह आया, उसमें ४०५ पुरुष, ३१९ स्त्रियां और ५९८ लड़के थे, उस बनिये ने हर एक पुरुष को २९ पैसे, हर एक स्त्री को २३ पैसे और हर एक लड़के को १६ पैसे दिये, तब कहो उस दिन उसने कितने पैसे बांटे । )

( २८ ) कस्यचिद्भूस्वामिनः ५२ ग्रामा आसन्, तेषु प्रत्येकग्रामे ९८७ आम्रवृक्षा अभवन्, यदि तेन भूस्वामिना प्रत्येकग्रामस्य प्रत्येकवृक्षतः १९०८ आम्रफलानि गृहीतानि, तर्हि तत्समीपे कियन्त्याम्रफलान्यभवन् ।

( किसी जमीनदार के ५२ गांव थे, उनमें से हर एक गांव में ९८७ आम के पेड़ थे, उस जमीनदार ने हर एक गांव के हर एक पेड़ से १९०८ आम लिये तब कहो उसके पास कितने आम हुए । )

( २९ ) कस्मिंश्चित्पुस्तके ८० अध्याया आसन्, प्रत्यध्यायं १५० पत्राणि, प्रतिपत्रं ३० पङ्क्तयः, प्रत्येकपङ्क्तौ च ३९ अक्षराण्यभवन्, सम्पूर्णपुस्तके कियन्त्यक्षराण्यासन् ।

( किसी पुस्तक में ८० अध्याय थे, हर एक अध्याय में १५० पत्र थे, हर एक पत्र में ३० पङ्क्तियां थी और हर एक पङ्क्ति में ३९ अक्षर थे तब कहो उस सम्पूर्ण पुस्तक में कितने अक्षर थे । )

( ३० ) यदा २९ प्रस्थमितगोधूमानां मूल्यं रूप्यकमेकमभूत्, तदा कश्चन वणिक् तेनैवार्घेण २९६ रूप्यकैर्गोधूमानक्रीणात्, यदा च कतिपयदिनानन्तरं रूप्यकेण १९ प्रस्थपरिमितगोधूमा अलभ्यन्त, तदा तेनैवार्घेण कतिपयगोधूमप्रस्थास्तेन वणिजा विक्रीताः, येन तस्य १२५ रूप्यकमित आयो जातः, तदानीन्तस्य समीपे कति गोधूमप्रस्था अवशिष्टाः ।

( जब एक रुपये के २९ सेर गेहूं मिलते थे उस वक्त किसी बनिये ने उसी भाव

से २१६ रुपये के गेहूँ खरीद लिये, कुछ दिन बाद जब रुपये के १९ सेर गेहूं मिलने लगे तब उस बनिये ने उसी भाव से कुछ सेर गेहूं बेच दिये, जिससे उसको १२९ रुपये का मुनाफा हुआ, तब कहो उसके पास कितने सेर गेहूँ बचे थे । )

## भजनम् ।

( ४३ ) द्वयोः संख्ययोः प्रथमसंख्यातो द्वितीयसंख्या कियद्वारं शुद्ध्यतीत्यस्यावगमकप्रकारो भजनशब्देन भागहारशब्देन वा व्यवह्रियते । अत्र प्रथमसंख्या भाज्यसंज्ञिका द्वितीया च भाजकसंज्ञिका हराख्या वा भवति । तथा भाज्याद्भाजको यावद्वारं शुद्ध्यति तद्वारसंख्या लब्धिसंज्ञिका च भवति । यथा, ४२, ६ अनयोः संख्ययोः ४२ एतत्संख्यातः ६ इयं संख्या सप्तवारं विशुद्ध्यतीत्यत्र भाज्यः ४२ भाजकः ६ लब्धिश्च ७ वर्तते । अत्र द्विचत्वारिंशत्संख्या षड्भिर्भक्ता चेल्लब्धिः सप्त संख्या भवतीत्युच्यते । अनेनेदं स्फुटमवगम्यते यद्भजनमपि व्यवकलनस्यैव भेदोऽस्तीति, यत्रैकैव वियोजकसंख्या वियोज्यसंख्यातः कतिपयवारं शोधनीया भवति ।

( दो संख्याओं में, पहली संख्या में दूसरी संख्या कितनी बार घट सकती है, इसके जानने के प्रकार को भजन वा भागहार कहते हैं । यहां पहिली संख्या को भाज्य और दूसरी को भाजक वा हर कहते हैं । भाज्य में भाजक जितना बार घट सकता है उस वार संख्या को लब्धि कहते हैं । जैसे, ४२, ६ इन दो संख्याओं में ४२ इसमें ६ यह ७ बार घट सकता है, इस लिये यहां भाज्य ४२, भाजक ६, और लब्धि ७ है । यहां, बयालीस में छका भाग देने से लब्धि सात आती है, ऐसा कहते हैं । इससे यह स्पष्ट मालूम होता है कि भजन भी व्यवकलन ही का एक भेद है, जहां एक ही वियोजक संख्या को वियोज्य संख्या में कई बार घटाना होता है । )

( ४४ ) ÷ इदं चिह्नं भजनद्योतकं भवति । यदैतच्चिह्नं मध्येसंख्याद्वयं स्थाप्यते, तदैतच्चिह्नेन प्रथमसंख्या द्वितीयसंख्यया विभाज्यास्तीति सूच्यते । यथा, २०÷४, अत्रैतच्चिह्नं, २० अयं ४ अनेन विभाज्योऽस्तीति द्योतयति । अथवा, कस्याश्चित्संख्याया अधस्तादेकां रेखां कृत्वा तदधो द्वितीयसंख्यायाः स्थापनेनाप्युपरितनसंख्याधस्तनसंख्यया विभाज्यास्तीति सूच्यते । यथा, $\frac{६४}{८}$, अत्रानेन स्वरूपेण ६४ अयं ८ अनेन विभाज्योऽस्तीति द्योत्यते ।

(÷ यह भजन का द्योतक चिन्ह होता है। दो संख्याओं के बीच में जब यह चिन्ह रखा जाता है, तब यह सूचित करता है कि पहिली संख्या में दूसरी का भाग देना है। जैसे, २०÷४, यहां २० में ४ का भाग देना है, इसको यह चिन्ह सूचित करता है। अथवा, किसी संख्या के नीचे एक रेखा कर के उसके नीचे दूसरी संख्या को रखने से भी यह सूचित किया जाता है कि ऊपर की संख्या में नीचे की संख्या का भाग देना है। जैसे, $\frac{६४}{८}$ इस स्वरूप से यह सूचित होता है कि ६४ में ८ का भाग देना है।)

( ४५ ) इत्थं भाजकेन भाज्ये भक्ते यत्र यत्किञ्चिदवशिष्यते, तत्र तच्छेषसंज्ञं भवति। इदं शेषं सर्वदा भाजकादल्पं भवति। यथा, ६१÷८, अत्र ६१ अस्मात् ८ अस्मिन्सप्तवारं विशोधिते ५ अयमवशिष्यते, अतोऽत्र भाज्यः ६१ भाजकः ८, लब्धिः ७, शेषं ५ भवति।

( इस प्रकार भाजक का भाज्य में भाग देने पर जहां कुछ बचता है, वहां उसको शेष कहते हैं। यह शेष भाजक से सर्वदा न्यून होता है। जैसे, ६१÷८, यहां ६१ में ८ को सात बार घटाने पर ५ बच जाता है, इस लिये भाज्य ६१, भाजक ८, लब्धि ७ और शेष ५ है।)

( ४६ ) पूर्वोक्तलब्धिलक्षणेन, लब्धिसंख्या यावती स्यात्तावद्वारं भाजकसंख्यां विलिख्य तासां सर्वासां योगो भाज्यतुल्यो भवतीति यतः स्फुटम्प्रतीयते, अतः ( २९ ) प्रक्रमेण भाजकसंख्या यावती स्यात्तावद्वारं लब्धिसंख्यां विलिख्य तासां सर्वासां योगोऽपि भाज्यतुल्यः स्यात्। एतेन यत्र किमपि शेषं न भवति तत्र भाजकलब्ध्योर्घातो भाज्यतुल्यो भवति, यत्र च शेषं भवति तत्र भाजकलब्ध्योर्घातः शेषयुक्तो भाज्यतुल्यो भवतीति सिद्ध्यति।

( पहिले कहे हुए लब्धि के लक्षण से यह स्पष्ट मालूम होता है कि लब्धि की जितनी संख्या होगी उतनी बार भाजकसंख्या को लिख कर उन सब का योग भाज्य के समान होता है, इस लिये ( २९ ) प्रक्रम से भाजक की जितनी संख्या होगी उतनी बार लब्धिसंख्या को लिख कर उन सब का योग भी भाज्य के तुल्य होगा। इससे यह सिद्ध होता है कि जहां कुछ शेष नही बचता है वहां लब्धि और भाजक का घात भाज्य के समान होता है, और जहां कुछ शेष बचता है वहां लब्धि और भाजक के घात में शेष को जोड़ने से वह भाज्य के समान होता है।)

( ४७ ) भाजकलब्ध्योर्घातस्य भाज्यसमत्वाद्यत्र भाज्यः शून्यतुल्यो भवति तत्र लब्धिरपि शून्यतुल्यैव भवति। यत्र भाजकः शून्य-

तुल्यो भवति तत्र लब्धेरानन्त्यं भवति। भाज्याच्छून्यभाजकस्यासंख्यवारं विशोधनेनापि भाज्यो निःशेषो यतो न भवति, अतस्तत्र लब्धेरानन्त्यं सिद्ध्यति। यत्र च भाज्यभाजकावुभावपि शून्यतुल्यौ भवतस्तत्र शून्यभाजकलब्ध्योर्घातस्य शून्यसमत्वाद्या काचिदप्यभीष्टसंख्या लब्धिस्थाने भवितुमर्हति। एवं यत्र रूपतुल्यो भाजको भवति, तत्र भाज्यतुल्यैव लब्धिर्भवति।

(लब्धि और भाजक का घात भाज्य के समान होता है, यह सिद्ध होने से जहां भाज्य शून्य होता है वहां लब्धि भी शून्य होती है, जहां भाजक शून्य होता है वहां लब्धि अनन्त होती है। इसका कारण यह है कि भाज्य में शून्य भाजक को चाहे जितनी बार घटाओ भाज्य कभी निःशेष न होगा। इससे स्पष्ट है कि यहां वारसंख्या का कोई अन्त न होने से लब्धि अनन्त होती है। और जहां भाज्य और भाजक दोनों शून्य होते हैं, वहां शून्यभाजक और लब्धि इनका घात शून्य के अर्थात भाज्य के समान होने से लब्धि के स्थान में कोई अभीष्ट संख्या हो सकती है। इसी तरह जहां भाजक १ होता है, वहां लब्धि भाज्य के तुल्य होती है।)

(४८) भागहारेण काचित्संख्या समभागेषु विभाजयितुं शक्यते। तत्र यदा भागसंख्याद्योतको भाजको भवति, तदा लब्धिरेकभागप्रमाणं द्योतयति। यदा चैकभागप्रमाणद्योतको भाजको भवति, तदा लब्धिर्भागसंख्यां द्योतयति। यथा, ५४ आम्रफलानि षड्भ्यो बालकेभ्यो विभज्य प्रदेयानि सन्ति, तत्रैको बालकः कियदाम्रफलानि लभेत; अत्र भाज्ये ५४ अस्मिन् भागसंख्यया ६ अनया भक्ते लब्धमेकभागप्रमाणम् ९, अतोऽत्रैकबालकः ९ आम्रफलान्यलभत। एवं, ५४ आम्रफलानि कियद्बालकेभ्यो विभज्य दातुं शक्येरन्, यद्येकैकबालकः ९ आम्रफलानि लभेत; अत्र भाज्ये ५४ अस्मिन्नेकभागप्रमाणेन ९ अनेन भक्ते लब्धा भागसंख्या ६, अतोऽत्र ५४ आम्रफलानि षड्भ्यो बालकेभ्यो विभज्य दत्तानि।

(भागहार से किसी संख्या के समान भाग किये जाते हैं। उसमें भाजक जब भाग संख्या का द्योतक होता है तब लब्धि एक भाग के प्रमाण को सूचित करती है, और जब भाजक एक भाग के प्रमाण का द्योतक होता है तब लब्धि भाग संख्या को सूचित करती है। जैसे, ५४ आम यदि ६ लड़कों में बांट जांय तो हर एक लड़के को कितने आम मिलेंगे। यहां भाज्य ५४ इसमें भाग संख्या ६ इसका भाग देने

से ९ यह एक भाग का प्रमाण लब्ध हुआ, इस लिये हर एक लड़के को ९ आम मिलेंगे। इसी प्रकार, एक लड़के को ९ आम के हिसाब से ५४ आम कितने लड़कों में बांटे जा सकते हैं। यहां भाज्य ५४ इसमें एक भाग का प्रमाण ९ इसका भाग देने से ६ यह भाग संख्या लब्ध होती है, इस लिये ५४ आम ६ लड़कों में बांटे जा सकते हैं।)

## अथ भजनविधिः।

( ४८ ) पूर्वं भाज्यस्य वामभागे ) एवं चिन्हं कृत्वा तद्दक्षिणभागे च ( एवं चिन्हं कार्यम्। ततो वामपार्श्वस्थचिन्हस्य ) अस्य वामभागे भाजकं विलिख्य दक्षिणपार्श्वस्थचिन्हस्य ( अस्य दक्षिणभागे लब्धिं विलिखेत्। ततो भाज्यस्य वामपार्श्वस्था यावन्तोऽन्तिमाङ्का भाजकादधिकाःस्युस्तानन्त्यभाज्यस्प्रकल्पयेत्। ततो येनाङ्केन गुणिते भाजकेऽन्त्यभाज्याच्छोधिते शेषं भाजकादल्पं स्यात्तमङ्कं लब्धिस्थाने निवेश्य तेनाङ्केन गुणितं भाजकमन्त्यभाज्याच्छोधयेत्। यच्च शेषं स्यात्तस्य दक्षिणभागे भाज्यावशिष्टाङ्कानामन्तिममङ्कं विलिख्य तादृशं शेषम्पुनरन्त्यभाज्यस्प्रकल्पयेत्। पुनरस्मादन्त्यभाज्याद्यदङ्कगुणितभाजके शोधिते शेषं भाजकादल्पं भवेत्तमङ्कं लब्धिस्थानीयप्रथमाङ्कस्य दक्षिणभागे निवेश्य तदङ्कगुणितभाजकमन्त्यभाज्याच्छोधयेत्। एवन्तावत्कार्यं यावच्छेषदक्षिणभागे स्थापनाय भाज्येऽवशिष्टः कोऽप्यङ्को न भवेत्।

( पहिले भाज्य की बाईं तरफ ) ऐसा चिन्ह करके उसकी दाहिनी तरफ ( ऐसा चिन्ह करो। तब बाईं तरफ के ) इस चिन्ह की बाईं ओर भाजक को लिख कर दाहिनी ओर के ( इस चिन्ह की दाहिनी तरफ लब्धि को लिखो। तब भाज्य की बाईं तरफ के जितने अङ्क भाजक से अधिक होंगे उनको अन्त्यभाज्य कल्पना करो। तब जिस अङ्क से भाजक को गुण कर गुणनफल को अन्त्यभाज्य में घटा देने से शेष भाजक से कम रहे, उस अङ्क को लब्धि के स्थान में रखो। और उस अङ्क का और भाजक का जो गुणनफल होगा उसको अन्त्यभाज्य में घटा कर शेष की दाहिनी तरफ भाज्य के बचे हुये अङ्कों में जो बाईं तरफ का आखिरी अङ्क होगा उसको रखो। तब इस अङ्क के सहित जो शेष होगा उसको फिर अन्त्यभाज्य कल्पना करो। तब जिस अङ्क से भाजक को गुण कर गुणनफल को इस अन्त्यभाज्य में घटा देने से शेष भाजक से कम रहे, उस अङ्क को लब्धि के स्थान में पहिले रखे हुए अङ्क की दाहिनी

तरफ रखो। और उस अङ्क का और भाजक का जो गुणनफल होगा उसको अन्त्यभाज्य में घटा दो। ऐसा ही आगे तब तक करो जब तक शेष की दाहिनी तरफ रखने के लिये भाज्य में कोई अङ्क बचा न रहे।)

उदाहरणम्। ७८६०६÷९, अत्र लब्धिः का।

(यहां लब्धि क्या है।)

| भाजकः | भाज्यः | लब्धिः |
|---|---|---|
| ९) | ७८६०६ | (८७३४ |
| | ७२ | |
| | ६६ | |
| | ६३ | |
| | ३० | |
| | २७ | |
| | ३६ | |
| | ३६ | |
| | .. | |

अत्र भाज्यान्तिमाङ्कात् ७ अस्माद्भाजको न शुद्ध्यतात्यतः ७८ अयमन्त्यभाज्यः, अस्मात् ९, ८ अनयोर्वधमपहाय ६ इदं भाजकाल्पं शेषं जातं, ततः ८ इमं लब्धिस्थाने विन्यस्य शेषस्य ६ अस्य दक्षिणभागेऽवशिष्टभाज्यान्तिमाङ्कं ६ इमं संस्थाप्य जातः ६६ अयमन्त्यभाज्यः, अस्मात् ९, ७ अनयोर्वधमपास्य शेषं ३ इदं जातं, ततः ७ इमं लब्धिस्थानीयाङ्कस्य ८ अस्य दक्षिणपार्श्वे संस्थाप्य शेषस्य ३ अस्य दक्षिणभागेऽवशिष्टभाज्यान्तिमाङ्कः ० अयं स्थाप्यः, ततो जातः ३० अयमन्त्यभाज्यः, अस्मात् ९, ३ अनयोर्वधं विशोध्य शेषं ३ इदं जातं, ततः ३ इमं लब्धिस्थानीयाङ्कद्वयस्य ८७ अस्य दक्षिणभागे निवेश्य शेषस्य ३ अस्य दक्षिणपार्श्वेऽवशिष्टभाज्यान्तिमाङ्कः ६ अयं स्थाप्यः, ततो जातः ३६ अयमन्त्यभाज्यः, अस्मात् ९, ४ अनयोर्वधं विशोध्य जातं शेषं ०, ततः ४ इमं लब्धिस्थानीयाङ्कत्रयस्य ८७३ अस्य दक्षिणपार्श्वे निवेश्य शेषस्य ० अस्य दक्षिणपार्श्वे स्थापनाय भाज्येऽन्यः कोप्यङ्को नास्तीति जाता ८७३४ इयं लब्धिः।

(यहां भाज्य की बाईं तरफ के ७ इस अङ्क में भाजक घटता नहीं इसलिये ७८ यह अन्त्यभाज्य है, तब ९ अठे ७२ होते हैं इस लिये ८ को लब्धि के स्थान में रख कर ७२ को ७८ में घटाओ, तब शेष ६ बचा, फिर इस की दाहिनी तरफ बचे हुए भाज्य की बाईं तरफ के ६ इस आखिरी अङ्क को उतारो, तब ६६ यह अन्त्यभाज्य

हुआ, फिर ९ सत्ते ६३ होते हैं इस लिये ७ को लब्धि के स्थान में पहिले रखे हुए ८ इस अङ्क की दाहिनी तरफ रख कर ६३ को ६६ में घटाओ, तब शेष ३ बचा, इस शेष की दाहिनी तरफ भाज्य के ० इस आखिरी अङ्क को उतारो, तब ३० यह अन्त्य भाज्य हुआ, फिर ९ तियां २७ होते हैं इस लिये ३ को लब्धि स्थान में रखे हुये ८७ इन दो अङ्कों की दाहिनी तरफ रखो, और ३० में २७ को घटाने से शेष ३ बचा, तब इस शेष की दाहिनी तरफ भाज्य के ६ इस अङ्क को उतारो, तब ३६ यह अन्त्यभाज्य हुआ, फिर ९ चौके ३६ होते हैं इस लिये ४ को लब्धि स्थान में रखे हुए ८७३ इन तीन अङ्कों की दाहिनी तरफ रख कर ३६ को ३६ में घटाने से शेष ० हुआ, अब इस शेष पर रखने के लिये भाज्य में कोई अङ्क न होने से ८७३४ यह लब्धि हुई।)

(५०) एवं यत्रान्त्यभाज्यो भाजकादल्पो भवेत्तत्र लब्धिस्थानीयाङ्कानां दक्षिणभागे शून्यं निवेश्य तस्यान्त्यभाज्यस्य दक्षिणभागेऽवशिष्टभाज्यान्तिमाङ्को निवेश्यः। एवं लब्धिस्थाने तावच्छून्यानि स्थाप्यानि यावदन्त्यभाज्यो भाजकादधिको न भवेत्।

(जहां अन्त्यभाज्य भाजक से न्यून होगा, वहां लब्धिस्थान के अङ्कों की दाहिनी तरफ शून्य को रख कर उस अन्त्यभाज्य की दाहिनी तरफ बचे हुए भाज्य की बाईं तरफ के आखिरी अङ्क को उतारो। इस प्रकार लब्धि के स्थान में तब तक शून्यों को रखो जब तक अन्त्य भाज्य भाजक से अधिक न होगा।)

उदाहरणम्। १३३११४÷१९, अत्र का लब्धिः।

(यहां लब्धि क्या होगी।)

भाजकः भाज्यः लब्धिः

```
१९ ) १३३११४ ( ७००६
     १३३
     -----
     ···११४
        ११४
       -----
        ···
```

अत्रान्त्यभाज्यः १३३ अस्मात् १९×७ अनयोर्वधं विशोध्य ७ अयं लब्धिस्थाने स्थाप्यः, ततः शेषस्य ० अस्य दक्षिणभागे भाज्यान्तिमाङ्कं १ इमं संस्थाप्य जातोऽन्त्यभाज्यः १ अयं भाजकादल्पोऽस्तीत्यतो लब्धिस्थानीयाङ्कस्य ७ अस्य दक्षिणभागे शून्यं निवेश्य १ अस्य दक्षिणपार्श्वे भाज्यान्तिमाङ्कं १ इमं संस्थाप्य जातोऽन्त्यभाज्यः ११ अयमपि भाजकादल्पोऽस्तीत्यतो लब्धिस्थानेऽपरं शून्यं निवेश्य ११ अस्य दक्षिणभागे भाज्यान्तिमाङ्कः ४ अयं स्थाप्यः, ततो जातः ११४ अयमन्त्यभाज्यः, अस्मात् १९×६ अनयोर्वधमपास्य शेषं ० जातं,

लब्धिस्थाने च ६ अयं स्थाप्यः ।

( यहां अन्त्यभाज्य १३३ है, अब १९ सत्ते १३३ होते हैं इस लिये ७ को लब्धि के स्थानमें रख कर १३३ में १३३ को घटाओ, तब शेष ० बचा, इस पर भाज्य का १ यह अङ्क उतारो, तब १ यह अन्त्यभाज्य हुआ, यह भाजक से कम है इस लिये लब्धिस्थान में के ७ इसकी दाहिनी तरफ ० को रख कर १ इसकी दाहिनी तरफ भाज्य का १ यह अङ्क उतारो, तब ११ यह अन्त्यभाज्य हुआ, यह भी भाजक से कम है, इस लिये लब्धिस्थान में और एक शून्य रख कर ११ इस पर भाज्य का ४ यह अङ्क उतारो, तब ११४ यह अन्त्यभाज्य हुआ, फिर १९ छके ११४ होते हैं, इस लिये ६ को लब्धि के स्थान में रख कर ११४ में ११४ को घटा दो, तब शेष ० बचा । )

( ५१ ) एवं भाज्ये भाजकेन भक्ते यदि किञ्चिन्नावशिष्येत, तर्हि लब्धिस्थाने या संख्या भवेत्सा पूर्णा लब्धिः स्यात् । यदि किञ्चिदवशिष्येत, तर्हि लब्ध्यग्रे—एवं रेखां कृत्वा तदुपरिभागे शेषं विलिख्य तदधोभागे भाजको लेख्यः । अत्रेयं सावयवा लब्धिः स्यात् ।

( इस प्रकार भाज्य में भाजक का भाग देने पर यदि कुछ शेष न बचे वहां लब्धि के स्थान में जो संख्या होगी वह पूर्ण लब्धि होती है। और यदि कुछ शेष बचे तो लब्धि के आगे—ऐसी रेखा करके उस रेखा के ऊपर शेष को लिखो और उसके नीचे भाजक को लिखो, यहां यह सावयव लब्धि होती है । )

उदाहरणम् । १२४५६७९÷१५, अत्र लब्धिः का ।

( यहां लब्धि क्या होती है । )

भाजकः भाज्यः लब्धिः

१५ ) १२४५६७९ ( ८३०४५ $\frac{४}{१५}$

१२०

४५

४५

६७

६०

७९

७५

शेषम् ४

अत्र पूर्वोक्तक्रियया ८३०४५ $\frac{४}{१५}$ इयं सावयवा लब्धिर्जायते ।

( यहां पहिले कही हुई क्रिया करने से ८३०४५ $\frac{४}{१५}$ यह सावयव लब्धि होती है। )

( ५२ ) यदा भाजकेऽनेकाङ्का भवन्ति, तदा यदङ्कगुणितभाजकान्तिमाङ्कोऽन्त्यभाज्यस्यान्तिमादङ्कादङ्कद्वयाद्वा विशुद्ध्यति तमङ्कं लब्धिस्थाने विलिख्य तद्गुणितसकलभाजकमन्त्यभाज्याद्विशोधयेत् । यदि च लब्ध्यङ्कगुणितसकलभाजकोऽन्त्यभाज्यादधिको भवेत्तर्ह्येकोनलब्धिस्थाङ्केन सकलभाजकं संगुण्य तमन्त्यभाज्याद्विशोधयेत् । यदा च भाजकान्तिमस्थाने रूपं भवति तदा यदङ्कगुणितभाजकान्तिमाङ्कद्वयमन्त्यभाज्यस्यान्तिमादङ्कद्वयादङ्कत्रयाद्वा विशुद्ध्यति तदङ्कं लब्धिस्थाने विलिख्य तद्गुणितसकलभाजकमन्त्यभाज्याद्विशोधयेत् । अन्यत्सर्वम्पूर्वोक्तवदेव कार्यम् ।

( जब भाजक में अनेक अङ्क होते हैं, तब जिस अङ्क से गुणा हुआ भाजक की बाईं तरफ का आखिरी अङ्क अन्त्यभाज्य की बाईं तरफ के एक या दो अन्तिम अङ्कों में घट सके उस अङ्क को लब्धि के स्थान में रख कर उस अङ्क से गुणे हुए सम्पूर्ण भाजक को अन्त्यभाज्य में घटा दो । यदि लब्धिस्थान के अङ्क से गुणा हुआ सम्पूर्ण भाजक अन्त्यभाज्य से अधिक हो तो लब्धि के अङ्क में एक घटा कर उससे सम्पूर्ण भाजक को गुण दो, और गुणनफल को अन्त्यभाज्य में घटा दो । और जब भाजक की बाईं तरफ का अन्तिम अङ्क १ होता है, तब जिस अङ्क से गुणे हुए भाजक की बाईं तरफ के अन्तिम दो अङ्क अन्त्यभाज्य की बाईं तरफ के अन्तिम दो या तीन अङ्कों में घट सके उस अङ्क को लब्धिस्थान में रख कर उस अङ्क से गुणे हुए सम्पूर्ण भाजक को अन्त्यभाज्य में घटा दो । और बाकी सब क्रिया पहिले कहे हुए प्रकार के अनुसार ही करो । )

उदाहरणम् । ११९५८९१÷१३८५, अत्र लब्धिः का ।

( यहां लब्धि क्या है । )

| भाजकः | भाज्यः | लब्धिः |
|---|---|---|
| १३८५ ) | ११९५८९१ | ( $८६३\frac{६३६}{१३८५}$ |
| | ११०८० | |
| | ८७८९ | |
| | ८३१० | |
| | ४७९१ | |
| | ४१५५ | |
| | शेषम् ६३६ | |

अत्रान्त्यभाज्यः ११९५८ अयं वर्तते, भाजकान्तिमस्थाने च १ रूपं वर्तते, अतो नवभिर्गुणितं भाजकान्तिमाङ्कद्वयं १३ इदं अन्त्यभाज्यान्तिमाङ्कत्रयात् ११९ अस्माच्छुद्ध्यतीति नवसंख्यां

लब्धिस्थाने विलिख्य तद्गुणितसकलभाजकोऽन्त्यभाज्याच्छोद्ध्यः, किन्तु नवभिर्भाजके गुणिते गुणनफलं १२४६५ इदमन्त्यभाज्यादधिकं, अत एकोनलब्ध्या ८ अनया भाजकं संगुण्य गुणनफलमन्त्यभाज्याच्छोद्ध्यं, लब्धिस्थाने च ८ अयं लेख्यः, ततः शेषदक्षिणभागे भाज्यान्तिमाङ्कं संस्थाप्यान्त्यभाज्यान्तिमाङ्कद्वयात् ८७ अस्मात् षड्गुणितभाजकान्तिमाङ्कद्वयं शुद्ध्यतीति लब्धिस्थाने ६ इमं विलिख्य ६ एतद्गुणितभाजकोऽन्त्यभाज्याच्छोद्ध्यः, ततः शेषदक्षिणभागे भाज्यान्तिमाङ्कं निवेश्यान्त्यभाज्यान्तिमाङ्कद्वयात् ४७ अस्मात् त्रिगुणितभाजकान्तिमाङ्कद्वयं शुद्ध्यतीति लब्धिस्थाने ३ इमं विलिख्य ३ एतद्गुणितभाजकोऽन्त्यभाज्याच्छोद्ध्यः ।

( यहां अन्त्यभाज्य ११९६८ यह है, तब भाजक का अन्तिम अङ्क १ होने से १३ का अन्त्यभाज्य के अन्तिम ११९ इन तीन अङ्कों में भाग देखने से १३ नवां ११७ होते हैं, इस लिये ९ को लब्धि के स्थान में रख कर नौ से भाजक को गुण कर गुणनफल को अन्त्यभाज्य में घटाना चाहिये, किन्तु नौ का और भाजक का गुणनफल १२४६९ यह होता है, यह अन्त्यभाज्य से अधिक होने से ९ में १ को घटा कर ८ इससे भाजक को गुण कर गुणनफल को अन्त्यभाज्य में घटा दो, और ८ को लब्धि के स्थान में रखो, फिर शेष की दाहिनी तरफ भाज्य के अन्तिम अङ्क को उतारो, फिर अन्त्यभाज्य की बाईं तरफ के ८७ इन दो अन्तिम अङ्कों में १३ का भाग देखने से १३ छके ७८ होते हैं, इस लिये ६ को लब्धि के स्थान में रख कर ६ से भाजक को गुण दो, और गुणनफल को अन्त्यभाज्य में घटा कर शेष की दाहिनी तरफ भाज्य के अन्तिम अङ्क को उतारो, फिर अन्त्यभाज्य को बाईं तरफ के ४७ इन दो अन्तिम अङ्कों में १३ का भाग देखने से १३ तियां ३९ होते हैं इस लिये ३ को लब्धि के स्थान में रख दो, और ३ से भाजक को गुण कर गुणनफल को अन्त्य भाज्य में घटा दो । )

( ५३ ) भाजकस्यैवंविधानि खण्डानि कार्याणि येषां वधो भाजकसमः स्यात् । ततस्तेष्वेकतमेन खण्डेन भाज्ये भक्ते या लब्धिः स्यात्सा द्वितीयखण्डेन भाज्या । अत्र या लब्धिः स्यात्सा तृतीयखण्डेन भाज्या । एवमग्रेऽपि कृतेऽन्ते या लब्धिर्भवेत्सैव वास्तवा लब्धिः स्यात् । किन्तु शेषस्य भाजकादल्पत्वादन्ते यच्छेषं भवेत्तद्वास्तवं शेषं न भवितुमर्हतीति तज्ज्ञानोपायः प्रदर्श्यते । भाजकस्य खण्डद्वये कृते प्रथमशेषं प्रथमभाजकगुणितद्वितीयशेषज्ञानयोर्योगेन समं वास्तवं शेषं

तत्र भवति । भाजकस्य खण्डत्रये कृते प्रथमशेषं, प्रथमभाजकगुणितद्वितीयशेषं, प्रथमभाजकद्वितीयभाजकतृतीयशेषाणां घातश्चैतेषां त्रयाणां योगेन तुल्यं वास्तवं शेषं भवति । एवं भाजकस्य खण्डचतुष्टयं कृतश्चेत् , प्रथमशेषं, प्रथमभाजकगुणितद्वितीयशेषं, प्रथमभाजकद्वितीयभाजकतृतीयशेषाणां घातः, प्रथमभाजकद्वितीयभाजकतृतीयभाजकचतुर्थशेषाणां घातश्चैतेषां चतुर्णां योगेन समं तत्र वास्तवं शेषं भवति । एवमग्रेऽपि ज्ञेयम् ।

( भाजक के ऐसे खण्ड करो जिनका घात भाजक के तुल्य होगा । तब उनमें से एक खण्ड का भाज्य में भाग देने से जो लब्धि आवेगी उस लब्धि में द्वितीय खण्ड का भाग दो । फिर यहां जो लब्धि आवेगी उसमें तृतीय खण्ड का भाग दो । ऐसा ही आगे करने पर अन्त में जो लब्धि होगी वह वास्तव लब्धि होगी । परन्तु शेष भाजक से न्यून होता है, इस कारण अन्त में जो शेष होगा वह वास्तविक शेष न हो सकेगा, इस लिये उसके जानने का प्रकार यह है:- यदि भाजक के दो खण्ड किये हों तो प्रथमशेष और प्रथमभाजकगुणितद्वितीयशेष, इन दोनों के योग के तुल्य वास्तव शेष होगा । भाजक के तीन खण्ड किये हों तो प्रथमशेष, प्रथमभाजकगुणितद्वितीयशेष, और प्रथमभाजक द्वितीयभाजक और तृतीयशेष इनका घात, इन तीनों के योग के समान वास्तव शेष होगा । और यदि भाजक के चार खण्ड किये हों तो प्रथमशेष, प्रथमभाजकगुणितद्वितीयशेष, प्रथमभाजक द्वितीय भाजक और तृतीय शेष इनका घात, और प्रथमभाजक द्वितीयभाजक तृतीयभाजक और चतुर्थशेष इनका घात, इन चारों के योग के तुल्य वहां वास्तव शेष होगा । इस प्रकार आगे भी समझ लो । )

उदाहरणम् (१) ५७८९८÷२४, अत्र लब्धिः का ।

( यहां लब्धि क्या है । )

भाज्यः

प्रथमभाजकः ६) ५७८९८ — अत्र २४ अस्य ६×४

द्वितीयभाजकः ४) ९६४९ लब्धिः, ४ प्रथमशेषम् , एवं विधं खण्डद्वयं

२४१२ लब्धिः, १ द्वितीयशेषम्, कृतं, ततो जाता

२४१२ इयं वास्तवा लब्धिः, प्रथमशेषं ४ प्रथमभाजकगुणितद्वितीयशेषं ६ अनयोर्योगः १० इदं वास्तवं शेषं जातम् ।

( यहां २४ इसके ६×४ ऐसे दो खण्ड किये, तब २४१२ यह वास्तविक लब्धि

हुई, प्रथमशेष ४ और प्रथमभाजकगुणित द्वितीय शेष ६ इनका योग १० यह वास्तव शेष हुआ।)

उदाहरणम् ( २ ) ७८९६४÷८४, अत्र लब्धिः का।

( यहां लब्धि क्या है। )

| | भाज्यः | |
|---|---|---|
| प्रथमभाजकः | ७) ७८९६४ | अत्र ८४ अस्य ७×३ |
| द्वितीयभाजकः | ३) ११२८४ लब्धिः, ६ प्रथमशेषम्, | ×४ एतादृशं खण्ड- |
| तृतीयभाजकः | ४) ३७६१ लब्धिः, १ द्वितीयशेषम्, | त्रयं कृतं, ततो जाता |
| | ९४० लब्धिः, १ तृतीयशेषम्, | ९४० इयं वास्तवा |

लब्धिः, प्रथमशेषं ६, प्रथमभाजकगुणितद्वितीयशेषं ७, प्रथमभाजक-द्वितीयभाजकतृतीयशेषाणां घातः २१, एषां त्रयाणां योगः ३४ इदं वास्तवं शेषं जातम्।

( यहां ८४ इसके ७×३×४ ऐसे तीन खण्ड किये, तब ९४० यह वास्तव लब्धि हुई, प्रथमशेष ६, प्रथमभाजक गुणित द्वितीयशेष ७, प्रथमभाजक द्वितीयभाजक और तृतीयशेष इनका घात २१, इन तीनों का योग ३४ यह वास्तव शेष हुआ।)

( ५४ ) भाजकस्यादौ यावन्ति शून्यानि स्युस्तावद्भिरादिमाङ्कैः रहिते भाज्य आदिमशून्यरहितेन भाजकेन भाजिते च या लब्धिः सैव वास्तवा लब्धिः स्यात्, त्यक्तैर्भाज्यादिमाङ्कैर्दक्षिणभागे युतमन्तिमशेषं वास्तवं शेषं स्यात्। एवं भाज्ये भाजके च कतिचिदादिमशून्यानि यदि स्युस्तर्हि ताभ्यां भाज्यभाजकाभ्यां तुल्यसंख्याकशून्यान्यपनीय भजनविधिः कार्यः।

( भाजक की दाहिनी तरफ जितने शून्य होंगे। उतने भाज्यकी दाहिनी तरफ के अङ्कों को अलग करने पर जो अवशिष्ट भाज्य होगा, उसमें शून्यरहित भाजक का भाग दो। जो लब्धि आवेगी वह वास्तविक लब्धि होगी, और अन्त में जो शेष बचेगा उसकी दाहिनी तरफ भाज्य से अलग किये हुए अङ्कों को रखने से वह वास्तविक शेष होगा। इसी प्रकार यदि भाज्य और भाजक दोनों की दाहिनी तरफ कुछ शून्य हों तो उन भाज्य और भाजक दोनों में से समान संख्या के शून्यों को काट कर तब भागहार की क्रिया करो।)

उदाहरणम् ( १ ) ११२३९७८६÷३१८०००, अत्र लब्धिः का।

( यहां लब्धि क्या है। )

भाजकः भाज्यः लब्धिः अभीष्टा

३१८ ) ११२३९ ( ३५ $\frac{१०९७८९}{३१८०००}$

९५४

१६९९

१५९०

अभीष्टशेषम् १०९७८९

अत्र भाजकस्यादौ शून्यत्रयं वर्तते, अतो भाज्यस्य ७८९ इदमादिमाङ्कत्रयं पृथक् कार्यम्, ततोऽवशिष्टभाज्ये शून्यरहितभाजकेन भाजिते शेषं १०९ अस्य दक्षिणपार्श्वे परित्यक्तभाज्यादिमाङ्कत्रयस्य स्थापनेन जातं १०९७८९ इदं वास्तवशेषम्।

( यहां भाजक की दाहिनी तरफ तीन शून्य हैं, इस लिये भाज्य की दाहिनी तरफ के ७८९ इन तीन अङ्कों को अलग करो, तब शून्यरहित भाजक से अवशिष्ट भाज्य का भाग देने से शेष १०९ यह बचा, इसकी दाहिनी तरफ भाज्य से अलग किये हुए उन तीन अङ्कों को रखने से १०९७८९ यह वास्तविक शेष हुआ। )

उदा० ( २ ) ५१२००००÷४१९०००, अत्र लब्धिः का ।

( यहां लब्धि क्या है। )

भाजकः भाज्यः लब्धिः

४१९ ) ५१२० ( १२ $\frac{९२}{४१९}$

४१९

९३०

८३८

९२

अत्र भाज्यभाजकाभ्यां त्रीणि त्रीणि तुल्यसंख्याकशून्यान्यपनीय जातौ भाज्यभाजकौ ५१२०, ४१९ आभ्यां जाता १२ $\frac{९२}{४१९}$ इयं वास्तवा लब्धिः ।

( यहां भाज्य और भाजक दोनो में से तीन तीन शून्य हटा कर बचे हुए ५१२०, ४१९ इन भाज्य भाजकों से १२ $\frac{९२}{४१९}$ यह वास्तविक लब्धि हुई। )

( ५५ ) यत्र १०, १००, १००० इत्यादिसंख्यासु कापि भाजकस्थाने भवति, तत्रैक १ संख्याथा दक्षिणपार्श्वे यावन्ति शून्यानि स्युस्तावन्तो भाज्यादिमाङ्काः शेषस्थाने भवन्ति, अवशिष्टभाज्याङ्काश्च लब्धिस्थाने भवन्ति। यथा, १२६÷१०, अत्र लब्धिः १२ शेषं ६। एवं २५८९१÷१०० अत्र लब्धिः २५८ शेषं ९१ ।

( जहां १०, १००, १००० इत्यादि संख्याओं में से कोई संख्या भाजक के स्थान में होतो है, वहां १ को दाहिनी तरफ जितने शून्य होंगे उतने भाज्यकी दाहिनो तरफ के आखिरी अङ्क शेष के स्थान में होते हैं और बचे हुए भाज्य के अङ्क लब्धि के स्थान में होते हैं। जैसे, १२६ ÷ १०, यहां लब्धि १२ और शेष ६ है। इसी प्रकार २९८९१ ÷ १००, यहां लब्धि २९८ और शेष ९१ यह है। )

( ५६ ) अथ लब्धेः शुद्ध्यशुद्धिज्ञानोपायः प्राचीनाचार्योक्तः प्रदर्श्यते। भाज्यभाजकलब्धिशेषेषु प्रत्येकस्यैकदशकादिस्थानाङ्कानां योगः कार्यः। अस्मिन्योगेऽङ्कद्वयं चेत्तयोरङ्कयोरपि योगः कार्यः, एवं तावत्कार्यं यावदेक एवाङ्को योगे स्यात्। अयं योगाङ्कः क्रमेण भाज्यैकाङ्कः, भाजकैकाङ्कः, लब्ध्येकाङ्कः, शेषकाङ्कश्च भवति। अथ भाजकैकाङ्कलब्ध्येकाङ्कयोर्घाते शेषैकाङ्को योज्यः। अस्मिन्योगेऽङ्कद्वयं चेत्तयोरङ्कयोरपि योगः कार्यः। अयं योगैकाङ्को भाज्यैकाङ्केन समश्चेल्लब्धिः शुद्धा, अन्यथाऽशुद्धेति ज्ञेयम्।

( अब प्राचीन आचार्यों ने कहा हुआ लब्धि जांचने का प्रकार दिखलाते हैं:— भाज्य, भाजक, लब्धि और शेष इन चारों में से हर एक के एक, दश, आदि स्थानों के अङ्कों का योग करो। यदि इस योग में दो अङ्क हों तो उन दो अङ्कों का भी योग करो। ऐसा तब तक करो जब तक योग में एक अङ्क न रहे इस योग के अङ्क को क्रम से भाज्यैकाङ्क, भाजकैकाङ्क, लब्ध्येकाङ्क और शेषैकाङ्क कहते हैं। फिर भाजकैकाङ्क और लब्ध्येकाङ्क के घात में शेषैकाङ्क जोड दो। इस योग में यदि दो अङ्क हों तो उन दो अङ्कों का फिर योग करो। यह योग का अङ्क भाज्यैकाङ्क के तुल्य हो तो लब्धि शुद्ध है, यदि तुल्य न हो तो लब्धि को अशुद्ध समझो। )

यथा, भाज्यः ७१९८३७, भाजकः,५१२ लब्धिः १४०५, शेषं ४७७, अत्रभाज्याङ्काः ७, १, ९, ८, ३, ७ एषां योगः ३५, अत्राङ्कद्वयमस्तीत्यतः ३, ५ अनयोर्योगः ८ अयं भाज्यैकाङ्को जातः, भाजकाङ्काः ५, १, २ एषां योगः ८ अयं भाजकैकाङ्को जातः, ततो लब्ध्यङ्काः १, ४, ०, ५ एषां योगः १० अत्राङ्कद्वयसत्वात् १, ० अनयोर्योगः १ अयं लब्ध्येकाङ्को जातः, एवं शेषाङ्काः ४, ७, ७ एषां योगः १८ अत्राङ्कद्वयस्य सत्वात् १, ८ अनयोर्योगः ९ अयं शेषैकाङ्को जातः, अथ भाजकैकाङ्कः ८ लब्ध्येकाङ्कश्च १ अनयोर्घातः ८ अस्मिन् शेषकाङ्कस्य ९ अस्य योजनेन जातो योगः १७ अत्राङ्कद्वयं वर्तते, अतः १, ७ अनयोर्योगः ८ अयं भाज्यैका-

ङ्केन ८ अनेन समः, अतः पूर्वोक्ता लब्धिः शुद्धास्तीति ज्ञायते ।

( जैसे, भाज्य ७१९८३७, भाजक ५१२, लब्धि १४०५, शेष ४७७, यहां भाज्य के अङ्क ७, १, ९, ८, ३, ७ इनका योग ३५ यहां दो अङ्क होने से ३, ५ इनका योग ८ यह भाज्यकाङ्क हुआ, भाजक के अङ्क ५, १, २, इनका योग ८ यह भाजकैकाङ्क हुआ, लब्धि के अङ्क १, ४, ०, ५ इनका योग १० इसमें दो अङ्क होने से १, ० इनका योग १ यह लब्ध्येकाङ्क हुआ, इसी तरह शेष के अङ्क ४, ७, ७ इनका योग १८ इसमें दो अङ्क होने से १, ८ इनका योग ९ यह शेषैकाङ्क हुआ, अब भाजकैकाङ्क ८ और लब्ध्येकाङ्क १ इनका घात ८ इसमें शेषैकाङ्क ९ को जोडने से १७ यह योग हुआ, इसमें दो अङ्क हैं, इसलिये १, ७ इनका योग ८ यह भाज्यैकाङ्क ८ इसके समान है, इसलिये उक्त लब्धि शुद्ध है । )

## अभ्यासार्थमुदाहरणानि ( ६ ) ।

अधोलिखितप्रश्नेषु लब्धयः काः स्युः ।

( नीचे लिखे प्रश्नों में लब्धि क्या हैं । )

(१) ६७४÷२ ( २ ) ८०६२१÷४ ( ३ ) ३८४७४÷८ ( ४ ) २४५६० ÷१० ( ५ ) ३९०४२÷१६ ( ६ ) ३८९५६÷२६ ( ७ ) ९६१००÷४८ ( ८ ) ८०८०८०÷६२ ( ९ ) ४७५००÷९१ ( १० ) २८९२३४÷३२९ ( ११ ) २६५३४९÷५८४ ( १२ ) ९९९७७७०÷३९०६ ( १३ ) १२३४५६७८९÷९८७६५ ( १४ ) १८७६५४३२१÷१२३४५ ( १५ ) ४७९४६३८७÷७२००० ( १६ ) ९८५४३२००००÷५४३६००० ( १७ ) १०८०९२४८९०÷७२०३४० ( १८ ) १२००७३००९२÷८९७३२४ ( १९ ) ५६७८९२३१४६७०÷८९७६८६७ ( २० ) ९८७६५४०४५६७८९÷९५४८१२३ ( २१ ) २१८२७०४२५३००÷३७२९२०००० ( २२ ) ९५९८६४१५६८१८÷२५८५३५३४ ( २३ ) ३२००६९१७२८३÷९८५०००७ ( २४ ) ४१९५२३०३८२७१५÷८९७३१२५९ ( २५ ) २४९७५३०८२४९७५३०८÷४२४५८०२३६ ।

( २६ ) ५९६४४८ अस्मिन्केन राशिना भाजिते लब्धिः ६८४ एतावती स्यात् ।

( ५९६४४८ इसको कितने से भाग दें कि लब्धि ६८४ आवे । )

( २७ ) ८७९५७४ अस्मात् २४३ अस्य कतिवारं विशोधनेनान्तिमं शेषं स्यात् ।

( ८७९९७४ इसमें २४३ इसको कितनो बार घटाने से आखिरी शेष बचेगा । )

(२८) द्वयो राश्योर्वधः ७७७७७७७७ तत्रैको राशिः ९५९ अपरः कः ।

( दो संख्याओं का गुणनफल ७७७७७७७७, उनमें एक ९५९ है तो दूसरी बताओ । )

( २९ ) केन ६५७ अस्मिन् गुणिते ९९९९९९९९ इदं गुणनफलं स्यात् ।

( ६५७ को किस राशि से गुण देने पर ९९९९९९९९ यह गुणनफल होगा । )

( ३० ) २३३२८×३२ अत्र यद्गुणनफलं स्यात्तदेव ७२९ अस्मिन् केन गुणिते स्यात् ।

( किस संख्या को ७२९ से गुणा करने पर वही गुणनफल होगा जो २३३२८ को ३२ से गुणा करने पर होता है । )

( ३१ ) ७०६४२, ६९६५४ अनयोरन्तरादेतद्योगः कियद्गुणोवर्त्तते ।

( ७०६४२, ६९६५४ इनके अन्तर से इनका योग कै गुना है । )

( ३२ ) ८८९५५५३ अस्मिन् कतिवारं ३०१ अस्य योजनेनान्तिमयोगः ९०००००० अयं स्यात् ।

( ८८९९९९३ इसमें ३०१ को कितनी बार जोडने से अन्तिम योग ९०००००० यह होगा । )

( ३३ ) यत्र भाजकः ३२७, लब्धिः ८२०३, शेषश्च १०१ वर्तते, तत्र भाज्यः कः ।

( जहां भाजक ३२७, लब्धि ८२०३ और शेष १०१ है, वहां भाज्य क्या होगा । )

( ३४ ) यत्र शेषं ४३, अष्टगुणितशेषतुल्या लब्धिः, भाजकश्च सप्तगुणितशेषतुल्योऽस्ति तत्र भाज्यः कः ।

( जहां शेष ४३, शेष से आठ गुनी लब्धि और शेष से सात गुना भाजक होता है, वहां भाज्य क्या है । )

(३५) यत्र भाज्यः ५८९१२५, लब्धिः ८२७, शेषश्च ३०१, तत्र भाजकः कः।

(जहां भाज्य ५८९१२५, लब्धि ८२७ और शेष ३०१ है, वहां भाजक क्या होगा।)

( ३६ ) स राशिः कः, चतुर्विंशतिगुणितो यः ७२५ अस्मिन् योजितश्चेत् १५७२५ अयं योगः स्यात् ।

( वह राशि कौन है, जिसको २४ से गुण कर गुणनफल को ७२५ में जोड दें तो १५७२५ यह जोड होता है, )

( ३७ ) ५८०७९ अस्मिन् ६१९ अनेन भाजिते यावती लब्धिः यावच्च शेषं स्यात् , तावती लब्धिः तावच्छेषश्च कस्मिन् राशौ ७१४ अनेन भक्ते लभ्येत ।

( किस संख्या को ७१४ से भाग देने पर वही लब्धि और शेष आवेंगे जो ५८०७९ को ६१९ से भाग देने पर मिलते हैं। )

( ३८ ) काचित्संख्या १०५ अनेन विभाज्यास्ति, यदि १०५ अस्य ३×५×७ एवंविधैः खण्डैः खण्डभजनरीतिमवलम्ब्य भजनविधिः क्रियते, तर्हि २, ४, ५ एतानि यथाक्रमं शेषाणि भवन्ति, अत्र वास्तवं शेषं वद।

( किसी संख्या में १०५ इसका भाग देना है, तब यदि १०५ इसके ३×५×७ ऐसे खण्ड करके खण्ड भाग की रीति से भाग दें तो क्रम से २, ४, ५, यह शेष होते हैं, तब वास्तव शेष क्या होगा। )

( ३९ ) ०÷१; १२÷०; ०÷०; अत्र लब्धयः काः स्युः।

( ०÷५, १२÷०, ०÷०, यहां लब्धि क्या होंगी। )

( ४० ) यद्येकस्य मयूरस्य मूल्यं रूप्यकाष्टकं वर्तते, तर्हि १२५८४८ रूप्यकैः कियन्तो मयूरा लभ्यन्ते।

( यदि ८ रुपये में एक मोर मिलता है तो १२५८४८ रुपये में कितने मोर मिलेंगे। )

( ४१ ) यदि २४ मिनिटैरेका घटिका भवति, तर्हि १३८२४ मिनिटैः कति घटिकाः स्युः।

( २४ मिनिट में एक घटी होती है तो १३८२४ मिनिट में कितनी घटी होंगी। )

( ४२ ) एको धूमशकटः ५५ घटिकासु १३७५ क्रोशपरिमितमार्गं गच्छति, एक घटिकायां कति क्रोशान् यातुं स समर्थः।

( एक रेलगाड़ी ५५ घटी में १३७५ कोस चलती है तो एक घटी में वह कितने कोस जायगी। )

( ४३ ) कस्यचिद्रथचक्रस्य परिधिः ९ हस्तमितो वर्तते, १३६७१ हस्तमितमार्गगमने तस्य कति भ्रमयः स्युः।

( एक पहिये की गोलाई ९ हाथ है तो १३६७१ हाथ चलने में वह कितने चक्कर करेगा। )

( ४४ ) कस्मिंश्चित्पुस्तके ८३८६५६ अक्षराणि वर्तन्ते, तत्र यदि प्रतिपृष्ठं १६३८ अक्षराणि स्युस्तर्हि तत्पुस्तकपृष्ठसंख्यां वद।

( किसी पुस्तक में ८३८६५६ अक्षर हैं यदि उसके हर एक पृष्ठ में १६३८ अक्षर हों तो उस पुस्तक में कितने पृष्ठ होंगे। )

( ४५ ) कश्चन वणिक् ४२६५ रूप्यकैः १५४०० प्रस्थमिततण्डुलान्, ३७४४० प्रस्थमितगोधूमांश्च क्रीतवान्, यद्यष्टप्रस्थपरिमिततण्डुलानां मूल्यं रूप्यकमेकं स्यात्तर्हि रूप्यकेण कति गोधूमप्रस्थास्तेन क्रीताः ।

( किसी बनिये ने ४२६५ रुपये के १५४०० सेर चांवल और ३७४४० सेर गेहूं खरीदे, अगर एक रुपये के ८ सेर के भाव से उसने चांवल खरीदे तो बताओ गेहूं का भाव क्या था । )

( ४६ ) २३ अश्वानां विनिमयेन ३१ बलीवर्दाः १० रूप्यकाणि च लभ्यन्ते, यद्येकस्याश्वस्य मूल्यं ११५ रूप्यकाणि, तर्ह्येकस्य बलीवर्दस्य मूल्यं कियत्स्यात् ।

( २३ घोड़ों के बदले ३१ बैल और १० रुपये मिलते हैं, अगर एक घोड़े का दाम ११५ रु० हैं तो एक बैल का दाम बताओ । )

( ४६ ) कश्चन मनुजः प्रत्यहं द्वादशक्रोशात्मकदेशमतिक्रम्य ४८ दिनैः स्वग्रामात्कलिकातानगरीम्प्राप्नोति, यदि स प्रतिदिनं षोडशक्रोशमितमार्गं गन्तुं शक्तस्तर्हि कियद्भिर्दिनैस्ताम्पुरीम्प्राप्नुयात् ।

( एक मनुष्य प्रतिदिन १२ कोस चल कर ४८ दिन में अपने गांव से कलकत्ते पहुंच जाता है, अगर वह रोज १६ कोस के हिसाब से चले तो वह कितने दिन में कलकत्ते पहुंचेगा । )

( ४८ ) एको मनुज एकैकपणस्य षट् फलानि, एवं नवतिफलानि क्रीत्वा तावन्त्येवैकैकपणस्य नव फलानीत्येवं क्रीतवान्, ततः स पणस्य पञ्च फलानीत्येवं सर्वाणि फलानि विक्रीय मूलधनतः कियदधिकं लेभे ।

( एक मनुष्य ने पैसे के ६ के भाव से ९० फल मोल लिये और उतने ही फल पैसे के ९ के भाव से मोल लिये, फिर एक पैसे के ५ के भाव से वह सब फल उसने बेच दिये, तब उसको लागत से कितना अधिक मिला । )

( ४९ ) केनचिन्मनुजेन त्रिषु स्वतनयेषु १७९४ मुद्रा एवं विभाजिता येन ज्येष्ठसुतो मध्यमसुतात् १५० मुद्रा अधिकाः प्राप्नोत्, मध्यमश्च कनिष्ठसुतात् १५० मुद्रा अधिका अलभत, तदा कनिष्ठसुतः कति मुद्राः प्राप ।

( किसी मनुष्य ने अपने तीन लडकों में १७९४ रुपये इस तरह बांट दिये कि बड़े

लडके को मंझले से १५० रु० अधिक मिले। और मंझले को छोटे से १५० रु० अधिक मिले। कहो छोटे लडके को क्या मिला। )

( ५० ) कस्मिंश्चिद्दुर्गे एको धान्यराशिः ३५५ सैनिकानामेकोनचत्वारिंशद्दिवसभोजनपर्याप्त आसीत्, पञ्चदशदिनानन्तरं तत्रान्येऽपि सैनिकाः समागच्छन्, तदावशिष्टो धान्यराशिस्सर्वसैनिकानां दशदिवसभोजनपर्याप्तोऽभूत्; तदा कियन्तोऽधिकसैनिकास्तत्राजग्मुः।

( एक किले में ३५५ सिपाहियों के लिये ३९ दिन का खाना था, १५ दिन के बाद कुछ सिपाही और आगये, तब कुल के लिये १० दिन का खाना रह गया, तब कितने सिपाही और वहां आये। )

---

## दृढसंख्याः, अदृढसंख्याः, दृढापवर्तनानि च।

( ५७ ) या संख्या एकातिरिक्तान्यसंख्यया निःशेषा न भवेत्सा दृढसंज्ञिका स्यात्। यथा, १, २, ३, ५, ७, ११ इत्याद्याः संख्या दृढाः स्युः। या चैवं न भवेत्साऽदृढसंज्ञिका स्यात्। यथा, ४, ६, ९ इत्याद्याअदृढसंख्याः सन्ति।

( जो संख्या १ को छोड़ कर किसी दूसरी संख्या से निःशेष नहीं होती है उसको दृढ संख्या कहते हैं और जो संख्या ऐसी नही होती है उसको अदृढसंख्या कहते हैं। जैसे, १, २, ३, ५, ७, ११ इत्यादि संख्याएं दृढ हैं और ४, ६, ९ इत्यादि अदृढ संख्या हैं। )

( ५८ ) द्विपञ्चेतरस्या दृढसंख्याया एक स्थान एकत्रिसप्तनवानामन्यतमोऽङ्को वर्तते।

( २ और ५ इनको छोड़ कर जितनी दृढसंख्याएं होंगी उनके एक स्थान में १, ३, ७ और ९ इनमें से कोई एक अंक अवश्य होगा। )

( ५९ ) द्वयोः संख्ययोरल्पसंख्यया बृहत्संख्यायां विभाजितायां यदि शेषं किमपि न भवेत्तर्हि साल्पसंख्या बृहत्संख्याया अपवर्तनमुच्यते, बृहत्संख्या चाल्पसंख्याया अपवर्त्य इति कथ्यते। यथा, १२, ४ अनयोः १२ अयं ४ अनेन निःशेषं विभाजयितुं शक्योऽतः ४ अयं १२ अस्यापवर्तनं ४ अस्य च १२ अयमपवर्त्योऽस्ति।

( दो संख्याओं में छोटी संख्या का बडी संख्या में भाग देने से यदि शेष कुछ न रहे तो उस छोटी संख्या को बड़ी संख्या का अपवर्तन कहते हैं और बड़ी संख्या को छोटी

संख्या का अपवर्त्य कहते हैं। जैसे, १२ और ४ इन दो संख्याओं में १२ यह संख्या ४ से निःशेष होती है इसलिये १२ का ४ अपवर्तन है और ४ का १२ अपवर्त्य है।)

(६०) प्रत्येकसंख्यायाः १ रूपेण निःशेषं विभाजयितुं शक्यत्वाद्यद्यपि सकलसंख्यानां रूपमपवर्तनं, १ रूपस्य च प्रत्येकसंख्याऽपवर्त्यो भवितुमर्हति, तथाप्यत्रापवर्त्यापवर्तनशब्दव्यवहारस्तयोरेव संख्ययोर्भवति ययोरल्पतरा संख्या १ रूपं न भवति।

(जब कि हर एक संख्या १ से निःशेष हो सकती है तो प्रत्येक संख्या का अपवर्तन १ होगा और १ का अपवर्त्य प्रत्येक संख्या होगी। परन्तु यहां यह अवश्य जानना चाहिये कि अपवर्त्य और अपवर्तन इन दो शब्दों का व्यवहार उन्हीं दो संख्याओं में होता है जिनमें छोटी संख्या १ नहीं होती है।)

(६१) अथ कीदृशी संख्या कया संख्यया निःशेषं विभाजिता भवेदित्यस्य शीघ्रोपस्थितये कतिचित्सिद्धान्ताः प्रदर्श्यन्ते।

(अब किस प्रकार के संख्या में किस संख्या का निःशेष भाग दिया जा सकेगा, इसका शीघ्र ज्ञान होने के लिये कुछ सिद्धान्त लिखते हैं।)

(१) सिद्धान्तः। यस्या एकस्थाने शून्यद्विचतुःषडष्टानामन्यतमः कोऽप्यङ्को भवेत्सा समसंख्योच्यते। एतदन्या विषमसंख्याभिधीयते। समसंख्या अर्थात् यस्या एकस्थानीयाङ्कः शून्यं भवेदथवा स द्वाभ्यां निःशेषो भवेत्सा संख्या द्वाभ्यां निःशेषा स्यात्। यथा, ७४ अस्याः संख्याया एकस्थानीयोऽङ्कः ४ अयं द्वाभ्यां निःशेषो भवति, अतः ७४ इयं संख्यापि द्वाभ्यां निःशेषा भवेत्।

(जिस संख्या के एक स्थान में ०, २, ४, ६ और ८ इनमें से कोई अङ्क होगा उसको समसंख्या कहते हैं। इससे अन्य संख्या को विषमसंख्या कहते हैं। समसंख्या अर्थात् जिसके एक स्थान का अङ्क शून्य होगा अथवा वह २ से निःशेष होगा, वह संख्या २ से निःशेष होगी। जैसे, ७४ इसके एक स्थान का अङ्क ४ यह २ से निःशेष होता है इसलिये ७४ यह संख्या भी २ से निःशेष होगी।)

(२) सिद्धान्तः। यस्याः सकलाङ्कानां योगस्त्रिभिर्निःशेषो भवेत्सा संख्या त्रिभिर्निःशेषा भवेत्। यथा, ३२१ अस्याः संख्यायाः सकलाङ्कानां योगः ६ अयं त्रिभिर्निःशेषो भवति, अत उक्तसंख्यापि त्रिभिर्निःशेषा स्यात्।

(जिस संख्या के सब अङ्कों का योग ३ से निःशेष होगा वह संख्या ३ से निःशेष

होगी। जैसे, ३२१ इस संख्या के सब अङ्कों का योग ६ यह ३ से निःशेष होता है इसलिये उक्त संख्या भी ३ से निःशेष होगी।)

(३) सिद्धान्तः। यस्या आद्यस्थानद्वयस्थसंख्या चतुर्भिर्निःशेषा स्यादथवा यस्या आद्यस्थानद्वये शून्यद्वयं स्यात्सा सकलसंख्या चतुर्भिर्निःशेषा भवेत्। यस्याश्चाद्यस्थानत्रयस्थसंख्याष्टभिरपवर्त्या स्यादथवा यस्या आद्यस्थानत्रये शून्यत्रयं स्यात्सा सकलसंख्याष्टभिर्निःशेषा स्यात्। यथा, ३२४ अत्राद्यस्थानद्वयस्थसंख्या २४ इयं चतुर्भिर्निःशेषा भवति, अत उक्तसंख्यापि चतुर्भिर्निःशेषा भवेत्। एवं ५२२४ अत्राद्यस्थानत्रयस्थसंख्या २२४ इयमष्टभिर्निःशेषा भवतीत्युक्तसंख्याष्टभिर्निःशेषा स्यात्।

(जिस संख्या की दाहिनी ओर के दो अंकों से बनी हुई संख्या ४ से निःशेष होगी अथवा जिसकी दाहिनी ओर दो शून्य होंगे वह संपूर्ण संख्या ४ से निःशेष होगी। इसी तरह जिस संख्या की दाहिनी ओर के तीन अंकों से बनी हुई संख्या ८ से निःशेष होगी अथवा जिसकी दाहिनी ओर तीन शून्य होंगे वह संपूर्ण संख्या ८ से निःशेष होगी। जैसे, ३२४ इस संख्या की दाहिनी ओर के दो अंकों से बनी हुई संख्या २४ यह ४ से निःशेष होती है इसलिये उक्त संख्या भी ४ से निःशेष होगी। इसीतरह ५२२४ इसकी दाहिनी ओर के तीन अंकों से बनी हुई संख्या २२४ यह ८ से निःशेष होती है इसलिये उक्त संख्या भी ८ से निःशेष होगी।)

(४) सिद्धान्तः। यस्या आद्याङ्कः पञ्च शून्यं वा भवेत्सा संख्या पञ्चभिर्निःशेषा स्यात्। यथा, ७०, ८५ इदं संख्याद्वयं पञ्चभिर्निःशेषितं भवति।

(जिस संख्या के एक स्थान में ० वा ५ होंगे वह संख्या ५ से निःशेष होगी। जैसे, ७०, ९५ यह दोनो संख्याएं ५ से निःशेष होती हैं।)

(५) सिद्धान्तः। यस्याः संख्यायाः सकलाङ्कानां योगो नवभिर्निःशेषो भवेत्सा संख्या नवभिरपवर्त्या स्यात्। यथा, ८४६ अस्याः संख्यायास्सकलाङ्कानां योगः १८ अयं नवभिर्निःशेषो भवतीत्युक्तसंख्या नवभिर्निःशेषा भवेत्।

(जिस संख्या के सब अंकों का योग ९ से निःशेष होगा वह संख्या ९ से निःशेष होगी। जैसे, ८४६ इस संख्या के सब अंकों का योग १८ यह ९ से निःशेष होता है इसलिये उक्त संख्या ९ से निःशेष होगी।)

( ६ ) सिद्धान्तः । यस्या आदावेकद्वित्र्यादिशून्यानि स्युःसा संख्या क्रमेण दशशतसहस्रादिसंख्याभिर्निःशेषा स्यात् । यथा, ७०, ९०००० इदं संख्याद्वयं क्रमेण दशभिरयुतेन च निःशेषं भवति ।

( जिस संख्या की दाहिनी ओर एक, दो, तीन आदि शून्य होंगे वह संख्या क्रम से १०, १००, १००० आदि संख्याओं से निःशेष होगी। जैसे, ७०, ९०००० यह दोनो संख्याएं क्रम से १० और १०००० से निःशेष होती हैं। )

( ७ ) सिद्धान्तः । यस्याः संख्यायाः प्रथमतृतीयपञ्चमादिविषमस्थानीयाङ्कयोगस्य द्वितीयचतुर्थषष्ठादिसमस्थानीयाङ्कयोगस्य चान्तरं शून्यमेकादशभिर्वा निःशेषं भवेत्सा संख्यैकादशभिर्निःशेषा स्यात् । यथा, ६९५७५ अस्याः संख्यायाः विषमस्थानीयाङ्कानां ५, ५, ६ एषां योगः १६, समस्थानीयाङ्कयोः ७, ९ अनयोर्योगः १६, एतद्योगद्वयस्यान्तरं शून्यमस्तीत्युक्तसंख्यैकादशभिर्निःशेषा स्यात् । एवमेव ५६५२६१४ अत्र विषमस्थानीयाङ्कानां ४, ६, ५, ५, एषां योगः २०, समस्थानीयाङ्कानां १, २, ६ एषां योगः ९, एतद्योगद्वयान्तरं ११ इदमेकादशभिर्निःशेषं भवतीत्युक्तसंख्यैकादशभिर्निःशेषा भवेत् ।

( जिस संख्या के, पहिला, तीसरा पांचवां इत्यादि विषमस्थानों के अङ्कों के योग का और दूसरा, चौथा, छठवा इत्यादि समस्थानों के अंकों के योग का अन्तर शून्य होगा, अथवा वह अन्तर ११ से निःशेष होगा तो वह संख्या ११ से निःशेष होगी। जैसे, ६९५७५ इस संख्या के विषम स्थानों के अंक ५, ५, ६ इनका योग १६ और समस्थानों के अंक ७, ९ इन का योग १६ इन दोनों योगों का अन्तर शून्य है इसलिये उक्त संख्या ११ से निःशेष होगी। इसी प्रकार ५६५२६१४ इस संख्या के विषम स्थानों के अंक ४,६,५,५ इनका योग २० सम स्थानों के अंक १, २, ६ इनका योग ९ इन दोनों योगों का अन्तर ११ यह ११ से निःशेष होता है इस लिये उक्त संख्या ११ से निःशेष होगी। )

( ८ ) सिद्धान्तः । काचित्संख्या सप्तभिरेकादशभिस्त्रयोदशभिर्वा निःशेषा भवितुमर्हति नवेत्यस्य निर्णय एवं क्रियते । निर्दिष्टसंख्यास्थिताङ्का दक्षिणपार्श्वतो यथा सम्भवमेवंविधेष्वङ्कसमूहेषु विभाजनीया येष्वङ्कत्रयं भवेत् । ततः प्रथमतृतीयादिविषमसमूहानां योगस्य द्वितीयचतुर्थादिसमसमूहानां योगस्य चान्तरं यदि शून्यं भवेदथवा तदन्तरं यदि सप्तभिरेकादशभिस्त्रयोदशभिर्वा निःशेषं स्यात्तर्हि सा

निर्दिष्टसंख्या सप्तभिरेकादशभिस्त्रयोदशभिर्वा निःशेषा भवेत्। यथा, २९१४३५७०४ अस्याः संख्यायाः ७०४, २९१ इमौ विषमसमूहौ, अनयोर्योगः ९९५, अत्र समसमूहस्तु ४३५ अयमेक एव, ९९५, ४३५ अनयोरन्तरं ५६० इदं सप्तभिर्निःशेषं भवति नत्वेकादशभिस्त्रयोदशभिर्वा, अत उक्तसंख्या सप्तभिर्निःशेषा स्यात्। एवमेव ६४३४५३५८ अत्र ३५८, ६४ इमौ विषमसमूहौ, अनयोर्योगः ४२२, समसमूहश्च ३४५ अनयोरन्तरं ७७ इदं सप्तभिरेकादशभिश्च निःशेषं भवतीत्युक्तसंख्या सप्तभिरेकादशभिश्च निःशेषा स्यात्।

( कोई संख्या ७ से ११ से वा १३ से निःशेष होगी वा नही इसका निर्णय इस तरह किया जाता हैः—निर्दिष्ट संख्याके अंकों को दाहिनी ओर से जहां तक संभव हो तीन तीन अंकों के समूहों में विभक्त करो। तब पहिला, तीसरा, पांचवा इत्यादि विषम समूहों के योग का और दूसरा, चौथा, इत्यादि सम समूहों के योग का अन्तर यदि शून्य होगा, अथवा वह अन्तर ७ से ११ से वा १३ से निःशेष होगा तो निर्दिष्ट संख्या ७ से ११ से वा १३ से निःशेष होगी। जैसे, २९१४३५७०४ इस संख्या में ७०४, २९१ यह विषम समूह हैं इनका योग ९९५ और सम समूह ४३५ यह एक ही है, ९९५, ४३५ इन का अन्तर ५६० यह ७ से ही निःशेष होता है ११ और १३ से निःशेष नही होता है इसलिये उक्त संख्या ७ से ही निःशेष होगी। इसी तरह ६४३४५३५८ इस संख्या में विषम समूह ३५८, ६४ यह दो हैं, इनका योग ४२२ और ३४५ यह सम समूह है इनका अन्तर ७७ यह ७ और ११ से निःशेष होता है इसलिये उक्त संख्या ७ और ११ से निःशेष होगी। )

( ६ ) सिद्धान्तः। यस्या अष्टाङ्कविशिष्टसंख्याया आदिमाङ्कचतुष्टयं क्रमेण तदुत्तरवर्त्यङ्कचतुष्टयेन तुल्यं भवेत्सा संख्या ७३, १३७ आभ्यां निःशेषा स्यात्। यथा ७३२१७३२१ अस्याः संख्यायाआदिमाङ्कचतुष्टयं ७३२१ इदं क्रमेण तदुत्तरवर्त्यङ्कचतुष्टयेन ७३२१ अनेन समम‍त उक्तसंख्या ७३, १३७ आभ्यां निःशेषा भवेत्।

( जिस आठ अंकों की संख्या में पहिले चार अङ्क क्रम से उनके आगे के चार अङ्कों के समान होंगे वह संख्या ७३ और १३७ इन दोनों संख्याओं से निःशेष होगी। जैसे, ७३२१७३२१ इस संख्या में पहिले चार ७३२१ यह अङ्क क्रम से उनके आगे के ७३२१ इन चार अङ्कों के समान हैं इसलिये उक्त संख्या ७३ और १३७ इन दोनों संख्याओं से निःशेष होगी। )

( १० ) सिद्धान्तः । यस्याः सप्ताङ्कविशिष्टसंख्याया आदिमाङ्कत्रयं क्रमेणान्तिमाङ्कत्रयेण समं तन्मध्ये च शून्यं स्यात्सा संख्या ७३, १३७ आभ्यां निःशेषा भवेत् । यथा, ३७१०३७१ इयं संख्या ७३, १३७ आभ्यां निःशेषा भवेत् ।

( जिस सात अङ्कों की संख्या में पहिले तीन अङ्क क्रम से अन्तिम तीन अङ्कों के तुल्य होंगे और उनके बीच में शून्य होगा वह संख्या ७३ और १३७ इन दोनों से निःशेष होगी । जैसे, ३७१०३७१ यह संख्या ७३, १३७ इन दोनों से निःशेष होगी । )

( ११ ) सिद्धान्तः । यस्याः षडङ्कविशिष्टसंख्याया आदिमाङ्कद्वयं क्रमेणान्तिमाङ्कद्वयेन तुल्यं मध्ये च शून्यद्वयं स्यात्सा संख्या ७३, १३७ आभ्यां निःशेषा स्यात् । यथा, ९५००९५ इयं संख्या ७३, १३७ आभ्यां निःशेषा भवेत् ।

( जिस छ अङ्कों की संख्या में पहिले दो अङ्क क्रम से अन्तिम दो अङ्कों के तुल्य होंगे और उनके बीच में दो शून्य होंगे वह संख्या ७३ और १३७ इन दोनों से निःशेष होगी । जैसे, ९५००९५ यह संख्या ७३, और १३७ इन दोनों से निःशेष होगी । )

( १२ ) सिद्धान्तः । यस्याः पञ्चाङ्कविशिष्टसंख्यायाः प्रथमोऽङ्कोऽन्तिमाङ्केन समस्तन्मध्ये च शून्यत्रयं स्यात्सा संख्यापि ७३, १३७ आभ्यां निःशेषा स्यात् । यथा, ५०००५ इयं संख्या ७३, १३७ आभ्यां निःशेषा भवेत् ।

( जिस पांच अङ्कों की संख्या में पहिला अङ्क अन्तिम अङ्क के तुल्य होगा और उनके बीच में तीन शून्य होंगे वह संख्या भी ७३ और १३७ इन दोनों से निःशेष होगी । जैसे, ५०००५ यह संख्या ७३ और १३७ इन दोनों से निःशेष होगी । )

( १३ ) सिद्धान्तः । यस्याश्चतुरङ्कविशिष्टसंख्याया अथवा पञ्चाङ्कविशिष्टसंख्याया द्विगुणाद्यस्थानद्वयस्थसंख्यया तुल्या शेषस्थानस्थसंख्या स्यात्सा संख्या ६७ अनेन निःशेषा भवेत् । यथा ५८२९ अत्राद्यस्थानद्वयस्थसंख्या २९ एतद्द्विगुणा शेषस्थानस्थसंख्या ५८ इयं वर्ततेऽत उक्तसंख्या ६७ अनेन निःशेषा स्यात् । एवं १४६७३ अत्राद्यस्थानद्वयस्थसंख्या ७३ एतद्द्विगुणा शेषस्थानस्थसंख्या १४६ इयं वर्ततेऽत उक्तसंख्या ६७ अनेन निःशेषा भवेत् ।

( जिस चार वा पांच अङ्कों की संख्या में पहिले दो अङ्कों की संख्या से शेष अङ्कों

की संख्या दूनी होगी वह संख्या ६७ से निःशेष होगी। जैसे, ९८२९ इस संख्या में पहिले दो अङ्कों की संख्या २९ इससे दूनी शेष अङ्कों की ९८ यह संख्या है, इसलिये उक्त संख्या ६७ से निःशेष होगी। इसी तरह १४६७३ इसमें पहिले दो अङ्कों की संख्या ७३ इससे दूनी शेष अङ्कों की १४६ यह संख्या है, इसलिये उक्त संख्या ६७ से निःशेष होगी।)

(१४) सिद्धान्तः। यस्याः संख्यायास्त्रिगुणाद्यस्थानद्वयस्थसंख्यया तुल्या शेषस्थानस्थसंख्या स्यात्सा संख्या ४३ अनेन निःशेषा स्यात्। यथा, २४९८३ इयं संख्या ४३ अनेन निःशेषा भवेत्।

(जिस संख्या में पहिले दो अङ्कों की संख्या से शेष अङ्कों की संख्या तिगुनी होगी वह संख्या ४३ से निःशेष होगी। जैसे, २४९८३ यह संख्या ४३ से निःशेष होगी।)

(१५) सिद्धान्तः। यस्याः संख्यायाः पञ्चगुणाद्यस्थानद्वयस्थसंख्यया तुल्या शेषस्थानस्थसंख्या स्यात्सा संख्या १६७ अनेन निःशेषा स्यात्। यथा, ७५१५ इयं संख्या १६७ अनेन निःशेषा भवेत्।

(जिस संख्या में पहिले दो अंकों की संख्या से शेष अंकों की संख्या पांचगुनी होगी वह संख्या १६७ से निःशेष होगी। जैसे, ७५१५ यह संख्या १६७ इससे निःशेष होगी।)

(१६) सिद्धान्तः। यस्याः संख्याया अष्टगुणाद्यस्थानद्वयस्थसंख्यया तुल्या शेषस्थानस्थसंख्या स्यात्सा संख्या ८९ अनेन निःशेषा भवेत्। यथा, १०४१३ इयं संख्या ८९ अनेन निःशेषा भवेत्।

(जिस संख्या में पहिले दो अङ्कों की संख्या से शेष अङ्कों की संख्या आठ गुनी होगी वह संख्या ८९ इससे निःशेष होगी। जैसे, १०४१३ यह संख्या ८९ इससे निःशेष होगी।)

(१७) सिद्धान्तः। यस्याः संख्याया नवगुणाद्यस्थानद्वयस्थसंख्यया तुल्या शेषस्थानस्थसंख्या स्यात्सा संख्या १७, ५३ आभ्यां निःशेषा भवेत्। यथा, २४३२७ इयं संख्या १७, ५३ आभ्यां निःशेषा स्यात्।

(जिस संख्या में पहिले दो अङ्कों की संख्या से शेष अङ्कों की संख्या नौ गुनी होगी वह संख्या १७ और ५३ इन दोनों से निःशेष होगी। जैसे, २४३२७ यह संख्या १७ और ५३ इन दोनों से निःशेष होती है।)

(१८) सिद्धान्तः। यस्याः संख्याया द्विगुणाद्यस्थानत्रयस्थसं-

ख्यया तुल्या शेषस्थानस्थसंख्या स्यात्सा संख्या २३, २९ आभ्यां निःशेषा भवेत्। यथा, ६८६३४३ इयं संख्या २३,२९ आभ्यां निःशेषा भवेत्।

( जिस संख्या में पहिले तीन अङ्कों की संख्या से शेष अङ्कों की संख्या दूनी होगी वह संख्या २३ और २९ इन दोनों से निःशेष होगी। जैसे, ६८६३४३ इसमें २३ और २९ इन दोनों का निःशेष भाग दिया जा सकता है। )

( ६२ ) काचिददृढसंख्यैवंविधेषु दृढखण्डेषु विभाजयितुं शक्यते येषां गुणनफलन्तददृढसंख्यया तुल्यं भवेत्। अस्य विधिः। उक्तसिद्धान्तसाहाय्येन पूर्वमदृढसंख्यायास्तादृशं खण्डद्वयं विधेयं यस्मिन्नेकं खण्डं दृढं भवेत्। अथ यद्यपरं खण्डमदृढं स्यात्तर्हि तस्याप्युक्तवत्खण्डद्वयं कार्यम्। एवान्तावत्करणीयं यावदपरं खण्डं दृढं न भवेत्। इत्थं यानि खण्डानि सम्पद्येरंस्तेषां गुणनफलमुक्तादृढसंख्यया तुल्यं भवेत्।

( किसी अदृढ संख्या के ऐसे दृढ खण्ड किये जा सकते हैं जिनका गुणनफल उस अदृढ संख्या के तुल्य होगा। इसका विधि—उक्त सिद्धान्तों की सहायता से उस अदृढ संख्या के पहिले ऐसे दो खण्ड करो जिनमें एक खण्ड दृढ होगा। दूसरा खण्ड यदि दृढ न होगा तो उसके भी इसी प्रकार के दो खण्ड करो। ऐसा तब तक करो जब तक दूसरा खण्ड दृढ न होगा। इस प्रकार जो खण्ड उत्पन्न होंगे उनका गुणनफल उस अदृढ संख्या के तुल्य होगा। )

उदाहरणम्। ६७७८२ अस्याः संख्याया एवंविधानि खण्डानि कार्याणि येषां गुणनफलमुक्तसंख्यातुल्यं स्यात्।

( इस संख्या के ऐसे खण्ड करो जिनका गुणनफल उक्त संख्या के तुल्य होगा। )

अत्रोक्तसंख्या समास्तीत्यत इयं (१) सिद्धान्तेन द्वाभ्यां निःशेषा स्यात्। अतः ६७७८२=*२×३३८९१। पुनः ३३८९१ अस्याः सकलाङ्कयोगस्त्रिभिर्निःशेषो भवतीति (२) सिद्धान्तेनेयं त्रिभिर्निःशेषा स्यात्। अतः ३३८९१=३×११२९७। पुनः ११२९७ अस्या विषमाङ्कयोगस्य समाङ्कयोगस्य चान्तरं शून्यमतः (७) सिद्धान्तेनेयं ११ अनेन निःशेषा स्यात्। अतः ११२९७=११×१०२७। पुनः १०२७ अस्या

* अत्र साम्यद्योतकेन = अनेन चिन्हेन, ६७७८२ इयं संख्या २, ३३८९१ अनयोर्गुणनफलेन समास्तीति सूच्यते।

विषमसमूहः ०२७ समसमूहः १, अनयोरन्तरं २६ इदं १३ अनेन निःशेषं भवतीति (८) सिद्धान्तेनेयं १३ अनेन निःशेषा स्यात्। अतः १०२७ =१३×७९ अत्रापरं खण्डं ७९ इदं दृढमत उक्तसंख्यायाः ६७७८२= २×३×११×१३×७९ इमानि दृढखण्डानि दृढापवर्तनानि वा जातानि।

( यहां उक्त संख्या सम है इसलिये (१) सिद्धान्त के अनुसार यह २ से निःशेष होगी। इसलिये ६७७८२=२×३३८९१। फिर ३३८९१ इसके सब अंकों का योग ३ से निःशेष होता है इसलिये (२) सिद्धान्त के अनुसार यह ३ से निःशेष होगी। इसलिये ३३८९१=३×११२९७। फिर ११२९७ इसके विषम स्थानों के अङ्कों के योग का और सम स्थानों के अङ्कों के योग का अन्तर शून्य होता है इसलिये (७) सिद्धान्त के अनुसार यह ११ से निःशेष होगी। इसलिये ११२९७=११×१०२७। फिर १०२७ इसमें विषम समूह ०२७ और सम समूह १ इनका अन्तर २६ यह १३ से निःशेष होता है इसलिये (८) सिद्धान्त के अनुसार यह १३ से निःशेष होगी। इसलिये १०२७=१३×७९। यहां दूसरा खण्ड ७९ यह दृढ है इसलिये उक्त संख्या के ६७७८२=२×३×११×१३×७९ यह दृढ खण्ड वा दृढापवर्तन हुए। )

## अभ्यासार्थमुदाहरणानि [ ७ ]

अधोलिखितसंख्याः २, ३, ४, ५, ८, ९, १०, ११ आसां काभिः संख्याभिर्निःशेषं विभाजयितुं शक्यन्ते।

( नीचे लिखी हुई संख्याएं २, ३, ४, ५, ८, ९, १० और ११ इनमें से कौन संख्याओं से निःशेष होंगी। )

(१) १३८ (२) ६४५ (३) ६८४ (४) ४२० (५) ८८४४ (६) ७६४२ (७) १२३० (८) १७७२ (९) २३११ (१०) ३४७५ (११) २३००० (१२) ७०६२८१ (१३) ७७७७७७ (१४) ६८६८६८ (१६) १२३४५६७८६०

अधोलिखितसंख्याः ७,११,१३ आसु कतमसंख्यया निःशेषाःस्युः।

( नीचे लिखी संख्याएँ ७,११,१३ इनमें से किस किस संख्या से निःशेष होंगी। )

(१६) ५५५५५५ (१७) ४२३३७८ (१८) ४१२३२१० (१९) ५५७३४५४५ (२०) १२३७८९६६६

अधोलिखितसंख्याः काभिर्निःशेषाः स्युः।

( नीचे लिखी संख्याएं किनसे निःशेष होंगी। )

(२१) १८६९३ (२२) २४६१२३ (२३) १३६१७ (२४) ९५१९ (२५) २७६३१ (२६) १५६५३

अधोलिखितसंख्याः स्वदृढापवर्तनेषु विभाजनीयाः।
( नीचे लिखी संख्याओं को उनके दृढापवर्तनों में विभक्त करो । )
(२७) ६३३३६ (२८) ८७६४५ (२९) १३२९९० (३०) १५३९०(३१) २७६२७६

---

## सावयवराशिनिरूपणम् ।

( ६३ ) तत्रादौ कतिचन प्राचीनार्वाचीनाङ्ग्लदेशीयवित्तादिमानपरिभाषाः प्रोच्यन्ते ।

**प्राचीनवित्तमानपरिभाषा**

२० वराटकाः = १ काकिणी
४ काकिण्यः = १ पणः ( ताम्रमयः )
१६ पणाः = १ द्रम्मः ( राजतः )
१६ द्रम्माः = १ निष्कः (सौवर्णः )

**आधुनिकवित्तमानपरिभाषा**

२ दमड़ी = १ छदाम
२ छदाम = १अधेला
२अधेला वा ४ छदाम } = १ पैसा
३ वा अंग्रेजी पाई } = १ पैसा
४ पैसा वा १२ पाई = १ आना
१६ आना = १ रुपया
१९ रुपया = १ गिन्नी

**आङ्ग्लदेशीयवित्तमानपरिभाषा**

४ फार्दिंग = १ पेनी ( ताम्रमयी मुद्रा )
१२ पेन्स = १ शिलिङ्ग ( राजतमुद्रा )
२ शिलिङ्ग = १ फ्लोरिन ( राजतमुद्रा )
५ शिलिङ्ग = १क्रौन ( राजतमुद्रा )
२० शिलिङ्ग = १ पौण्ड (स्टर्लिङ्ग) (स्वर्णमुद्रा), २१शिलिंग = १ गिनी ( स्वर्णमुद्रा )

प्रचलितभारतवर्षीयमुद्राः—पाई ( ताम्रमयी ) = पणतृतीयांशः, अधेला ( ताम्रमयी ) = पणार्धम् , पैसा ( ताम्रमयी ) = पणः, इकन्नी ( निकिलाख्यधातुमयी ) = ४ पणाः, दोअन्नी (निकिलाख्यधातुमयी राजती च ) = ८ पणाः, चौअन्नी ( राजती ) = द्रम्मः, अठन्नी ( राजती ) = द्रम्मद्वयम् , रुपया ( राजती ) = द्रम्मचतुष्टयम् , निष्कचतुर्थांशो वा । 'गिन्नी' एतन्मुद्रा पुरा पञ्चदशरूप्यकैः समासीत् , अधुना स्वर्णमूल्यानुरोधेन तन्मानं न्यूनमधिकञ्च भवति ।

१ फार्दिङ्ग = २$\frac{२}{३}$ पाई, १ पेन्स = १०$\frac{२}{३}$ पाई, १ शिलिंग = १० आने ८ पाई, १ पौण्ड = १३ रु० ५ आ० ४ पा० । अतः १ रु० = १ शिलिङ्ग ६ पेन्स वा १८ पेन्स । पौण्ड, शिलिंग, इत्यादीनां मानान्यस्थिराणि भवन्ति, यान्यत्र प्रदर्शितानि तानि वर्तमानमानानुसारेणेति ज्ञेयम् ।

**प्राचीनतौल्यपरिभाषा**

२ यवौ = १ गुञ्जा
३ गुञ्जाः = १ वल्लः
८ वल्लाः = १ धरणम्
२ धरणे = १ गद्याणकः
१४ वल्लाः = १ धटकः
अथ च
५ गुञ्जाः = १ माषः
१६ माषाः = १ कर्षः वा सुवर्णम्
४ कर्षाः = १ पलम्
१०० पलानि = १ तुला
२० तुलाः = १ भारः
१० भाराः = १ आचितः

**आधुनिकतौल्यपरिभाषा**

८ खसखस (पोस्ता का दाना) = १ चावल
८ चावल वा ३ यव = १ रत्ती
८ रत्ती = १ माशा
१२ माशा = १ तोला
५ तोला = १ छटांक
४ छटांक = १ पाव
२ पाव वा ८ छटांक = १ अधसेरा
४ पाव वा १६ छटांक = १ सेर
२$\frac{१}{२}$ सेर = १ ढइया
५ सेर = १ पंसेरी
८ पंसेरी वा ४० सेर = १ मन

**आङ्ग्लदेशीयतौल्यपरिभाषा**

२४ ग्रेन = १ पेनीवेट
२० पेनीवेट = १ औन्स
१२ औन्स = १ पौण्ड ( ट्रॉय )

( एतानि मानानि रत्नादितोलने उपयुज्यन्ते तदितरवस्तुतोलनेऽधोलिखितमानानि व्यवह्रियन्ते । )

२७$\frac{११}{३२}$ ग्रेन = १ ड्राम
१६ ड्राम = १ औन्स
१६ औन्स वा ७००० ग्रेन = १ पौण्ड (ॲव्हरडूपॉय्)
२८ पौण्ड = १ क्वार्टर
४ क्वार्टर = १ हण्ड्रेड्वेट
२० हण्ड्रेड्वेट = १ टन

गुञ्जेति रक्तवर्णोऽग्रभागे च श्यामलः कश्चन फलविशेषो वर्तते । सा गुञ्जा गुरुयवद्वयेन मध्यमयवत्रितयेन वा तुल्या भवति । तेन १ वल्ल = ३ रत्ती, १ धरण = ३ माशा, १ गद्याणक = ६ माशा, १ कर्ष = १० माशा, २ गद्याणक = १ तोला । रूप्यकपरिमाणं 'तोला' इत्यस्य परिमाणान्न्यूनमपि तत्स्थाने रूप्यकैरेव तोलनं क्रियते, तेन ५ रुपया = १ छटांक, ८० रुपया = १ सेर । कर्षपरिमितसुवर्णस्य सुवर्णसंज्ञा भवति । यो भारो मनुष्येण वोढुं शक्यः स भारः, यश्च भारः शकटेन वोढुं शक्यः स आचित इत्युच्यते ।

१ मन = १०० पौण्ड ( ट्रॉय ) = ८२$\frac{३}{७}$ पौण्ड ( ॲव्हरडूपॉय् ), ३५ सेर = ७२ पौण्ड ( ॲव्हर० ), १ सेर = २ पौण्ड ( ॲव्हर० ) + ४०० ग्रेन, १ अधसेरा = १ पौण्ड ( ॲव्हर० ) + २०० ग्रेन, १ पाव = ८ औन्स ( ॲव्हर० ) + १०० × ग्रेन, १ छटांक = २ औन्स ( ॲव्हर० ) + २५ ग्रेन, १ तोला = १८० ग्रेन, ४९ मन = ३६ हण्ड्रेड्वेट, १ हण्ड्रेड्वेट = १ मन १४ सेर ७$\frac{१}{९}$ छटांक, १ टन = २७ मन ८ सेर १४$\frac{२}{९}$ छटांक ।

| प्राचीनदैर्घ्यमानपरिभाषा | आधुनिकदैर्घ्यमानपरिभाषा |
|---|---|
| ८ यवोदराणि = १ अङ्गुलम् | ३ यव = १ अङ्गुल |
| १२ अङ्गुलानि = १ वितस्तिः | ३ अङ्गुल = १ गिरह |
| २ वितस्ती = १ हस्तः | ४ गिरह = १ बालिश्त वा बित्ता |
| ४ हस्ताः = १ दण्डः | ८ गिरह वा २४ अङ्गुल = १ हाथ |
| १० हस्ताः = १ वंशः | १६ गिरह वा २ हाथ = १ गज |
| ४० वंशाः = १ नल्वः | ९ हाथ १ बित्ता = १ गठ्ठा |
| २० नल्वाः वा २००० दण्डाः = १ क्रोशः | २० गठ्ठा वा ५५ गज = १ ज़रीब |
| २ क्रोशौ = १ गव्यूतिः | |
| २ गव्यूती = १ योजनम् | |

आङ्ग्लदेशीयदैर्घ्यमानपरिभाषा

१ इञ्च = प्रचलितपर्णविस्तारः
१२ इञ्च = १ फूट
३ फूट = १ यार्ड ( गज )
५½ यार्ड = १ पोल
४० पोल वा २२० यार्ड = १ फर्लाङ्ग
८ फर्लाङ्ग वा १७६० यार्ड = १ माइल
६ फूट = १ फेदम
६९$\frac{1}{2}$ माइल = १ डिग्री ( अंश )
$\frac{1}{60}$ डिग्री = १ भौगोलिकमाइल
३ भौगोलिकमाइल = १ नाविकलीग

यत्प्राचीनपरिभाषायां क्रोशमानमुक्तं तदेवाधुनिकपरिभाषायामपि ज्ञेयम्। 'गठ्ठा, ज़रीब' एतन्मानद्वयं भूमिदैर्घ्यमापनायोपयुज्यते। किन्त्वधुनाङ्ग्लदेशीयदैर्घ्यमानानामत्रप्रचाराधिक्यादांग्लदैर्घ्यमानान्येवाधुनिकदैर्घ्यमानानि भवन्ति। तथाङ्ग्लयार्ड ( गज ) इत्यस्य मानमाधुनिक 'गज' इत्येतस्य मानान्न्यूनमपि 'यार्ड' इत्यस्यार्थमेव हस्तशब्देन व्यवह्रियते। तेन क्रोशः = ४००० यार्ड। 'फेदम्' इत्येतन्मानं रज्जुना जलगाम्भीर्यमापन उपयुज्यते।

| प्राचीनक्षेत्रमानपरिभाषा | आधुनिकक्षेत्रमानपरिभाषा |
|---|---|
| १४४ वर्गाङ्गुलानि = १ वर्गवितस्तिः | २० अनवांसी = १ कचवांसी |
| ४ वर्गवितस्तयः = १ वर्गहस्तः | २० कचवांसी = १ बिस्वांसी |
| १०० वर्गहस्ताः = १ वर्गवंशः | २० बिस्वांसी = १ बिस्वा |
| ४०० वर्गवंशाः = १ निवर्तनम् | २० बिस्वा = १ बीघा |
| ४ निवर्तनानि = १ वर्गनल्वः | |

## आङ्ग्लदेशीयक्षेत्रमानपरिभाषा

| | |
|---|---|
| १४४ वर्गइञ्च = १वर्गफूट | ४० वर्गपोल = १ रूड |
| ९ वर्गफूट = १ वर्गयार्ड | ४ रूड वा ४८४० वर्गयार्ड = १ एकर |
| ३०¼ वर्गयार्ड = १ वर्गपोल | ६४० एकर = १ वर्गमाइल |

यस्य दैर्घ्यविस्तृती समे स्तः, तद्वर्गक्षेत्रमुच्यते। एकाङ्गुलदीर्घमेकाङ्गुलविस्तृतं च चतुरस्रक्षेत्रं वर्गाङ्गुलक्षेत्रं भवति। हस्तोन्मितदैर्घ्यविस्तृतिभ्यां यच्चतुर्भुजं क्षेत्रं भवति तद्वर्गहस्तसंज्ञकं भवति, एवमेव वर्गवंशादिक्षेत्राणि ज्ञेयानि। वितस्तिमितदीर्घे वितस्तिमितविस्तृते च चतुर्भुजक्षेत्रे १४४ वर्गाङ्गुलक्षेत्राणि भवन्ति। एवमग्रेऽपि ज्ञेयम्। १ ज़रीब (५५ गज) परिमितदीर्घं तावदेव विस्तृतं च चतुर्भुजक्षेत्रं 'बीघा' संज्ञकं, १ गट्ठा परिमितदीर्घं तावदेव विस्तृतं च चतुर्भुजक्षेत्रं 'बिस्वांसी' संज्ञकं च भवति। विंशतिवंशसंख्यैश्चतुर्भिर्भुजैर्निबद्धं क्षेत्रं निवर्तनसंज्ञकं भवति। एवमाङ्ग्ल 'यार्ड' इत्येतस्य हस्तद्वयतुल्यत्वात् १ बीघा = ३०२५ वर्गयार्ड, ८ बीघा = ५ एकर, १०२४ बीघा = १ वर्गमाइल।

| प्राचीनधान्यादिमानपरिभाषा | आङ्ग्लदेशीयधान्यादिमानपरिभाषा |
|---|---|
| ४ कुडवाः = १ प्रस्थः | ४ जिल = १ पिण्ट |
| ४ प्रस्थाः = १ आढकः | २ पिण्ट = १ क्वार्ट |
| ४ आढकाः = १ द्रोणः | ४ क्वार्ट = १ ग्यालन |
| १६ द्रोणाः = १ खारी | (एतानि मानानि द्रवपदार्थमापन उपयुज्यन्ते, शुष्कपदार्थमापने चाधोलिखितमानान्युपयुज्यन्ते।) |

| | |
|---|---|
| २ ग्यालन = १ पेक | ५ क्वार्टर = १ लोड |
| ४ पेक = १ बुशल | १८ ग्यालन = १ बॅरेल |
| ८ बुशल = १ क्वार्टर | |

चतुरङ्गुलविस्तीर्णं तावदेव दीर्घमुच्चं च यन्मृत्काष्ठलोहादिनिर्मितपात्रं, तत्कुडवसंज्ञकं भवति। एतत्पात्रं १ पाव वा ४ छटांकमितधान्यं धारयति। एवं प्रस्थपात्रं ४ पाव वा १ सेरमितधान्यं धारयतीत्यग्रेऽपि ज्ञेयम्। साम्प्रतमस्मिन्देशे परिमाणपात्रैर्लौक्यव्यवहारः प्रायो न भवति, किन्तु राजकीयतुलाधिकारिपुरुषैर्निर्धारितपरिमाणकै (बटखरा) रेव व्यवहारो भवति। ¼ छटांक, ½ छटांक, १ छटांक, २ छटांक (अधपई), ४ छटांक (पौवा), ८ छटांक (आधसेर), १ सेर, २ सेर, २½ सेर, ५ सेर, एतानि परिमाणकान्यत्र प्रचलितानि सन्ति। एक 'इञ्च' विस्तीर्णं तावदेव दीर्घमुच्चं च पात्रं 'घन इञ्च' संज्ञकं भवति। २७७¼ संख्यकघनइञ्चपात्रान्तर्गतं यावज्जलं स्यात्तावदेकग्यालनपात्रान्तर्गतं भवेत्। एकग्यालनपात्रान्तर्गतजलस्योन्मानम् = १० पौण्ड (ॲह्वर०) = ४ सेर १३⅗ छटांक। एकपिण्टपात्रान्तर्गतजलोन्मानम् = १ पौण्ड ४ औन्स

( ॲव्हर० ) = ९$\frac{13}{8}$ छटांक। एवमेकफूटविस्तीर्णं तावदेव दीर्घमुच्चं च पात्रं 'घनफूट' संज्ञकं भवति, एक 'घनफूट' पात्रान्तर्गतजलोन्मानम् = १००० औन्स ( ॲव्हर० ) = ३० शेर ६$\frac{1}{2}$ छटांक।

| प्राचीनकालमानपरिभाषा | आङ्ग्लदेशीयकालमानपरिभाषा |
|---|---|
| ६ प्राणाः = १ पलम् | ६० सेकण्ड = १ मिनिट |
| ६० पलानि = १ घटी | ६० मिनिट = १ अवर ( घण्टा ) |
| २ घट्यौ = १ मुहूर्तः | २४ घण्टा = १ डे (दिनम् अहोरात्रात्मकम् ) |
| ३$\frac{3}{4}$ मुहूर्ताः वा ७$\frac{1}{2}$ घट्यः = १ प्रहरः | ७ दिन = १ वीक ( हप्ता ) |
| ८ प्रहराः वा ६० घट्यः = १ दिनम् | २८, २९, ३०, ३१, दिन = १ मन्थ (महीना) |
| १५ दिनानि = १ पक्षः | ३६५ दिन = १ योयर ( वर्ष ) |
| २ पक्षौ वा ३० दिनानि = १ मासः | ३६६ दिन = १ लीप्यीयर ( लोन का वर्ष ) |
| २ मासौ = १ ऋतुः | १०० वर्ष = १ सेन्च्युरी ( शतकम् ) |
| ३ ऋतवः = १ अयनम् | |
| २ अयने वा १२ मासाः = १ वर्षम् | |

साम्प्रतमाङ्ग्लदेशीयकालमानैः प्रायोऽत्र लोकव्यवहारो भवति। दैवज्ञैः केवलम्प्राचीनकालमानानि व्यवह्रियन्ते। अत्र २४ घंटा = ६० घट्यः, १ घटी = २४ मिनिट, १ मिनिट = २$\frac{1}{2}$ पलानि। प्रशस्तेन्द्रियपुरुषस्य श्वासोच्छ्वासान्तर्वर्ती कालः प्राणशब्देनाभिधीयते। यस्मिन्नीशवीये वर्षे चतुर्भिर्भक्ते शेषं किमपि न भवति तत् 'लीप्यीयर' संज्ञकवर्षं भवति। एवं यानीशवीयशतकवर्षाणि चतुःशतैर्विभाजितानि निःशेषाणि भवन्ति तान्येव 'लीप्यीयर' संज्ञकवर्षाणि, तदितराणि च साधारणवर्षाणीत्युच्यन्ते। यथा, १८९६, १९२८, १२००, १६००, एतानि लीप्यीयरसंज्ञकवर्षाणि सन्ति। लीप्यीयरवर्षे फेब्रुअरीमासः २९ दिनात्मकः, साधारणवर्षे च स २८ दिनात्मको भवति। एप्रिल, जून, सप्टेम्बर, नवम्बरमासाः ३० दिनात्मकाः, अवशिष्टमासास्तु ३१ दिनात्मका भवन्ति।

| प्राचीनचक्रमानपरिभाषा | आङ्ग्लदेशीयचक्रमानपरिभाषा |
|---|---|
| ६० विकलाः = १ कला | ६० सेकण्ड = १ मिनिट |
| ६० कला = १ अंशः | ६० मिनिट = १ डिग्री ( अंश ) |
| ३० अंशाः = १ राशिः | ९० डिग्री = १ राइट् अँगल् ( समकोण ) |

३ राशयः वा ९० अंशाः = १ पदम् वा १ समकोणः

४ पदानि वा १२ राशयः वा ३६० अंशाः } = १ चक्रम्

